संसारविरहक्लेशौ न स्यातां हरिवत्सुखम् ॥ १३ ॥
तदा भवेद्दयालुत्वमन्यथा क्रूरता मता ।
बाधशंकापि नास्त्यत्र तदध्यासोऽपि सिद्ध्यति ॥१४॥
भगवद्धर्मसामर्थ्याद्विरागो विषये स्थिरः ।
गुणैर्हरेः सुखस्पर्शान्न दुःखं भाति कर्हिचित् ॥ १५ ॥
एवं ज्ञात्वा ज्ञानमार्गादुत्कर्षो गुणवर्णने ।
अमत्सरैरलुब्धैश्च वर्णनीयाः सदा गुणाः ॥ १६ ॥
हरिमूर्तिः सदा ध्येया संकल्पादपि तत्र हि ।
दर्शनं स्पर्शनं स्पष्टं तथाकृतिगती सदा ॥ १७ ॥
श्रवणं कीर्तनं स्पष्टं पुत्रे कृष्णप्रिये रतिः ।
पायोर्मलांशत्यागेन शेषभागं तनौ नयेत् ॥ १८ ॥
यस्य वा भगवत्कार्यं यदा स्पष्टं न दृश्यते ।
तदा विनिग्रहस्तस्य कर्तव्य इति निश्चयः ॥१९॥
नातः परतरो मन्त्रो नातः परतरः स्तवः ।
नातः परतरा विद्या तीर्थं नातः परात्परम् ॥२०॥
इति श्रीवल्लभाचार्यविरचितं निरोधलक्षणं समाप्तम् ॥१५॥

॥ अथ सेवाफलम् ॥

यादृशी सेवना प्रोक्ता तत्सिद्धौ फलमुच्यते ।
अलौकिकस्य दाने हि चाद्यः सिद्ध्येन्मनोरथः ॥१॥

फलं वा ह्यधिकारो वा न कालोऽत्र नियामकः ।
उद्वेगः प्रतिबन्धो वा भोगो वा स्याच्च बाधकम् ॥ २ ॥
अकर्तव्यं भगवतः सर्वथा चेद्गतिर्न हि ।
यथा वा तत्त्वनिर्द्धारो विवेकः साधनं मतम् ॥ ३ ॥
बाधकानां परित्यागो भोगेऽप्येकं तथापरम् ।
निष्प्रत्यूहं महान् भोगः प्रथमे विशते सदा ॥ ४ ॥
स विघ्नोऽल्पो घातकः स्ताद्बलादेतौ सदा मतौ ।
द्वितीये सर्वथा चिंता त्याज्या संसारनिश्चयात् ॥ ५ ॥
नन्वाद्ये दातृता नास्ति तृतीये बाधकं गृहम् ।
अवश्येयं सदा भाव्या सर्वमन्यन्मनोभ्रमः ॥ ६ ॥
तदीयैरपि तत्कार्यं पुष्टौ नैव विलम्बयेत् ।
गुणक्षोभोऽपि द्रष्टव्यमेतदेवेति मे मतिः ।
कुसृष्टिरत्र वा काचिदुत्पद्येत स वै भ्रमः ॥ ७ ॥
इति श्रीवल्लभाचार्यविरचितं सेवाफलनिरूपणं समाप्तम् १६.

## ॥ अथ परिवृढाष्टकम् ॥

कलिंदोद्भूतायास्तटमनुचरंती पशुपजां ।
रहस्येकां दृष्ट्वा नवसुभगवक्षोजयुगलाम् ।
दृष्टं नीवीग्रंथिश्लथयति मृगाक्ष्या हठतरं
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ १ ॥

समायाते स्वस्मिन्सुरनिलयसाम्यं गतवति
व्रजे वैशिष्ट्यं यो निजपदगताब्जांकुशयवैः ।
अकार्षीत्तस्मिन्मे यदुकुलसमुद्भासितमणौ
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ २ ॥

हिंहीहीहींकारान्प्रतिपशु वने कुर्वति सदा
नमद्ब्रह्मेशेंद्रप्रभृतिषु च मौनं धृतवति ।
मृगाक्षीभिः स्वेक्षानवकुवलयैरर्चितपदे
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ ३ ॥

सकृत्स्मृत्वा कुंभीयमिह परमं लोकमगम-
च्चिरं ध्यात्वा धाता समधिगतवान्यं न तपसा ।
विभौ तस्मिन्मह्यं सजलजलदालीनिभतनौ
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ ४ ॥

परा काष्ठा प्रेम्णां पशुपतरुणीनां क्षितिभुजां
सुहृत्कानां त्रासास्पदमखिलभाग्यं यदुपतेः ।
विभुर्यस्तस्मिन्मे दरवि कचजंबालजमुखे
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ ५ ॥

दरप्रादुर्भूताद्द्विजगणमहः पूरितवने
चरं कुर्वा राकारुचिरतरशोभाधिकरुचि ।
हरिर्यस्तस्मिन्स्त्रीगणपरिवृतो नृत्यति सदा-
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ ६ ॥

स्फुरद्‌गुंजापुंजाकलितनिजपादाब्जविलुठत्-
स्रजि श्यामाकामास्पदपदयुगे मेचकरुचि ।
वरांगे शृंगारं दधति शिखिनां पिच्छपटलै-
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ ७ ॥
दुरंतं दुःखाब्धिं हसितसुधया शोषयति यो
यदास्येन्दुर्गोपीनयनलिनानंदकरणम् ।
अनंगः सांगत्वं व्रजति मम तस्मिन् मुररिपौ
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ ८ ॥
इदं यः स्तोत्रं श्रीपरिवृढसमीपे पठति वा
शृणोति श्रद्धावान् रतिपतिपितुः पादयुगले ।
रतिं प्रेप्सुः शश्वत्कुवलयदलश्यामलतनौ
रतिः प्रादुर्भूता भवति न चिरात्तस्य सुदृढा ॥ ९ ॥
इति श्रीवल्लभाचार्यविरचितं श्रीपरिवृढाष्टकं स० ॥ १७ ॥

## ॥ अथ श्रीमधुराष्टकम् ॥

अधरं मधुरं वदनं मधुरं
नयनं मधुरं हसितं मधुरम् ।
हृदयं मधुरं गमनं मधुरं
मधुराधिपतेरखिलं मधुरम् ॥ १ ॥
वचनं मधुरं चरितं मधुरं

वसनं मधुरं वलितं मधुरम् ।
चलितं मधुरं भ्रमितं मधुरं
मधुराधिपतेरखिलं मधुरम् ॥ २ ॥
वेणुर्मधुरो रेणुर्मधुरः
पाणिर्मधुरः पादौ मधुरौ ।
नृत्यं मधुरं सख्यं मधुरं
मधुराधिपतेरखिलं मधुरम् ॥ ३ ॥
गीतं मधुरं पीतं मधुरं
भक्तं मधुरं सुप्तं मधुरम् ।
रूपं मधुरं तिलकं मधुरं
मधुराधिपतेरखिलं मधुरम् ॥ ४ ॥
करणं मधुरं तरणं मधुरं
हरणं मधुरं रमणं मधुरम् ।
वमितं मधुरं शमितं मधुरं
मधुराधिपतेरखिलं मधुरम् ॥ ५ ॥
गुंजा मधुरा माला मधुरा
यमुना मधुरा वीचिर्मधुरा ।
सलिलं मधुरं कमलं मधुरं
मधुराधिपतेरखिलं मधुरम् ॥ ६ ॥
गोपी मधुरा लीला मधुरा

युक्तं मधुरं भुक्तं मधुरम् ।
इष्टं मधुरं शिष्टं मधुरं
मधुराधिपतेरखिलं मधुरम् ॥ ७ ॥
गोपा मधुरा गावो मधुरा
यष्टिर्मधुरा सृष्टिर्मधुरा
दलितं मधुरं फलितं मधुरं
मधुराधिपतेरखिलं मधुरम् ॥ ८ ॥

इति श्रीवल्लभाचार्यविरचितं मधुराष्टकं समाप्तम् ॥ १८ ॥

## ॥ अथ शिक्षाश्लोकाः ॥

यदा बहिर्मुखा यूयं भविष्यथ कथंचन ।
तदा कालप्रवाहस्था देहचित्तादयोऽप्युत ॥ १ ॥
सर्वथा भक्षयिष्यंति युष्मानिति मतिर्मम ।
न लौकिकः प्रभुः कृष्णो मनुते नैव लौकिकम् ॥२॥
भावस्तत्राप्यस्मदीयः सर्वस्वश्चैहिकश्च सः ।
परलोकश्च तेनायं सर्वभावेन सर्वथा ।
सेव्यः स एव गोपीशो विधास्यत्यखिलं हि नः॥३॥

इति श्रीवल्लभाचार्यविरचिताः शिक्षाश्लोकाः समाप्ताः ॥१९॥

## अथ मंगलाचरणम् ।

श्रीकृष्णाय नमः ॥ श्रीगोपीजनवल्लभाय नमः ॥
चिंतासंतानहंतारो यत्पादांबुजरेणवः ।
स्वीयानां तान्निजाचार्यान्प्रणमामि मुहुर्मुहुः ॥ १ ॥
यदनुग्रहतो जन्तुः सर्वदुःखातिगो भवेत् ।
तमहं सर्वदा वंदे श्रीमद्वल्लभनंदनम् ॥ २ ॥
यदुक्तं तातचरणैः श्रीकृष्णः शरणं मम ।
अत एवास्ति नैश्चिन्त्यमैहिके पारलौकिके ॥ ३ ॥
मम चित्तस्य विश्वासः श्रीगोपीजनवल्लभे ।
यदा तदा कृतार्थोऽहं शोचनीयो न कर्हिचित् ॥ ४ ॥
इति श्रीविट्ठलेशविरचितं मंगलाचरणं समाप्तम् ॥ २० ॥

## अथ श्रीसर्वोत्तमस्तोत्रम् ।

प्राकृतधर्मानाश्रयमप्राकृतनिखिलधर्मरूपमिति ।
निगमप्रतिपाद्यं यत्तच्छुद्धं साकृति स्तौमि ॥ १ ॥
कलिकालतमश्छन्नदृष्टित्वाद्विदुषामपि ।
संप्रत्यविषयस्तस्य माहात्म्यं समभूद्भुवि ॥ २ ॥
दयया निजमाहात्म्यं करिष्यन्प्रकटं हरिः ।
वाण्या यदा तदा स्वास्यं प्रादुर्भूतं चकार हि ॥ ३ ॥
तदुक्तमपि दुर्बोधं सुबोधं स्याद्यथा तथा ।

तन्नामाष्टोत्तरशतं प्रवक्ष्याम्यखिलाघहृत् ॥ ४ ॥
ऋषिरग्निकुमारस्तु नाम्नां छंदो जगत्यसौ ।
श्रीकृष्णाऽस्यं देवता च बीजं कारुणिकः प्रभुः ॥५॥
विनियोगो भक्तियोगप्रतिबंधविनाशने ।
कृष्णाधरामृतास्वादसिद्धिरत्र न संशयः ॥ ६ ॥
आनंदः परमानंदः श्रीकृष्णास्यं कृपानिधिः ।
दैवोद्धारप्रयत्नात्मा स्मृतिमात्रार्तिनाशनः ॥ ७ ॥
श्रीभागवतगूढार्थप्रकाशनपरायणः ।
साकारब्रह्मवादैकस्थापको वेदपारगः ॥ ८ ॥
मायावादनिराकर्ता सर्ववादिनिरासकृत् ।
भक्तिमार्गाब्जमार्तंडः स्त्रीशूद्राद्युद्धृतिक्षमः ॥ ९ ॥
अङ्गीकृत्यैव गोपीशवल्लभीकृतमानवः ।
अङ्गीकृतौ समर्यादो महाकारुणिको विभुः ॥ १० ॥
अदेयदानदक्षश्च महोदारचरित्रवान् ।
प्राकृतानुकृतिव्याजमोहितासुरमानुषः ॥ ११ ॥
वैश्वानरो वल्लभाख्यः सद्रूपो हितकृत्सताम् ।
जनशिक्षाकृते कृष्णभक्तिकृन्निखिलेष्टदः ॥ १२ ॥
सर्वलक्षणसम्पन्नः श्रीकृष्णज्ञानदो गुरुः ।
स्वानन्दतुन्दिलः पद्मदलायतविलोचनः ॥ १३ ॥
कृपादृग्वृष्टिसंहृष्टदाससदासीप्रियः पतिः ।

रोषदृक्पातसंप्लुष्टभक्तद्विड् भक्तसेवितः ॥ १४ ॥
सुखसेव्यो दुराराध्यो दुर्लभांघ्रिसरोरुहः ।
उग्रप्रतापो वाक्सीधुपूरिताशेषसेवकः ॥ १५ ॥
श्रीभागवतपीयूषसमुद्रमथनक्षमः ।
तत्सारभूतरासस्त्रीभावपूरितविग्रहः ॥ १६ ॥
सान्निध्यमात्रदत्तश्रीकृष्णप्रेमा विमुक्तिदः ।
रासलीलैकतात्पर्यः कृपयैतत्कथाप्रदः ॥ १७ ॥
विरहानुभवैकार्थसर्वत्यागोपदेशकः ।
भक्त्याचारोपदेष्टा च कर्ममार्गप्रवर्तकः ॥ १८ ॥
यागादौ भक्तिमार्गैकसाधनत्वोपदेशकः ।
पूर्णानन्दः पूर्णकामो वाक्पतिर्विबुधेश्वरः ॥ १९ ॥
कृष्णनामसहस्रस्य वक्ता भक्तिपरायणः ।
भक्त्याचारोपदेशार्थनानावाक्यनिरूपकः ॥ २० ॥
स्वार्थोज्झिताखिलप्राणप्रियस्तादृशवेष्टितः ।
स्वदासार्थकृताशेषसाधनः सर्वशक्तिधृक ॥ २१ ॥
भुवि भक्तिप्रचारैककृते स्वान्वयकृत्पिता ।
स्ववंशे स्थापिताशेषस्वमाहात्म्यः स्मयापहः ॥ २२॥
पतिव्रतापतिः पारलौकिकैहिकदानकृत् ।
निगूढहृदयोऽनन्यभक्तेषु ज्ञापिताशयः ॥ २३ ॥
उपासनादिमार्गातिमुग्धमोहनिवारकः ।

भक्तिमार्गे सर्वमार्गवैलक्षण्यानुभूतिकृत् ॥ २४ ॥
पृथक्शरणमार्गोपदेष्टा श्रीकृष्णहार्दवित् ।
प्रतिक्षणनिकुञ्जस्थलीलारससुपूरितः ॥ २५ ॥
तत्कथाक्षिप्तचित्तस्तद्विस्मृतान्यो व्रजप्रियः ।
प्रियव्रजस्थितिः पुष्टिलीलाकर्ता रहःप्रियः ॥ २६ ॥
भक्तेच्छापूरकः सर्वाज्ञातलीलोऽतिमोहनः ।
सर्वासक्तो भक्तमात्रासक्तः पतितपावनः ॥ २७ ॥
स्वयशोगानसंहृष्टहृदयांभोजविष्टरः ।
यशःपीयूषलहरीप्लावितान्यरसः परः ॥ २८ ॥
लीलामृतरसाद्रार्द्रीकृताखिलशरीरभृत् ।
गोवर्धनस्थित्युत्साहस्तल्लीलाप्रेमपूरितः ॥ २९ ॥
यज्ञभोक्ता यज्ञकर्ता चतुर्वर्गविशारदः ।
सत्यप्रतिज्ञस्त्रिगुणातीतो नयविशारदः ॥ ३० ॥
स्वकीर्तिवर्धनस्तत्त्वसूत्रभाष्यप्रदर्शकः ।
मायावादाख्यतूलाग्निर्ब्रह्मवादनिरूपकः ॥ ३१ ॥
अप्राकृताऽखिलाकल्पभूषितः सहजस्मितः ।
त्रिलोकीभूषणं भूमिभाग्यं सहजसुन्दरः ॥ ३२ ॥
अशेषभक्तसंप्रार्थ्यचरणाब्जरजोधनः ।
इत्यानन्दनिधेः प्रोक्तं नाम्नामष्टोत्तरं शतम् ॥ ३३ ॥
श्रद्धाविशुद्धबुद्धिर्यः पठत्यनुदिनं जनः ।

स तदेकमनाः सिद्धिमुक्तां प्राप्नोत्यसंशयम् ॥ ३४ ॥
तदप्राप्तौ वृथा मोक्षस्तदाप्तौ तद्गतार्थता ।
अतः सर्वोत्तमं स्तोत्रं जप्यं कृष्णरसार्थिभिः ॥३५॥
इति श्रीमदग्निकुमारप्रोक्तं सर्वोत्तमस्तोत्रं सम्पूर्णम् ॥२१॥

## ॥ अथ श्रीवल्लभाष्टकम् ॥

श्रीमद्वृंदावनेन्दुप्रकटितरसिकानंदसंदोहरूप-
स्फूर्जद्रासादिलीलाऽमृतजलधिभराक्रान्तसर्वोऽपिशश्वत्॥१॥
तस्यैवात्मानुभावप्रकटनहृदयस्याज्ञया प्रादुरासी-
द्भूमौयः सन्मनुष्याकृतिरतिकरुणस्तं प्रपद्ये हुताशम्॥१॥
नाविर्भूयाद्भवां श्चेदधिधरणितलं भूतनाथोदितास-
न्मार्गध्वान्तांधतुल्यानिगमपथपतौ देवसर्गेऽपिजाताः।
धोषाधीशं तदेमे कथमपि मनुजाः प्राप्नुयुर्नैव दैवी-
सृष्टिर्व्यर्था च भूयान्निजफलरहिता देववैश्वानरैषा ॥२॥
न ह्यन्यो वागधीशाच्छ्रुतिगणवचसां भावमाज्ञातुमीष्टे
यस्मात्साध्वी स्वभावं प्रकटयति वधूरग्रतः पत्युरेव।
तस्माच्छ्रीवल्लभाख्यत्वदुदितवचनादन्यथा रूपयन्ति
भ्रान्ता ये ते निसर्गात्रिदशरिपुतया केवलाधन्तमोगाः।३॥
प्रादुर्भूतेन भूमौ व्रजपतिचरणाम्भोजसेवाख्यवर्त्म-
प्राकट्यं यत्कृतं ते तदुत निजकृते श्रीहुताशेति मन्ये।

यस्माद स्मिन्स्थितो यत्किमपि कथमपि क्वाप्युपाहर्तुमिच्छ-
त्यद्धा तद्गोपिकेशः स्ववदनकमले चारुहासे करोति ॥४॥
ऊष्णत्वैकस्वभावोऽप्यतिशिशिरवचः पुञ्जपीयूषवृष्टी-
रार्तेष्वत्युग्रमोहासुरनृषु युगपत्तापमप्यत्र कुर्वन् ।
स्वास्मिन्कृष्णास्यतां त्वं प्रकटयसि च नो भूतदेवत्वमेत-
द्यस्मादानन्दनदं श्रीव्रजजननिचये नाशकं चासुराद्येः ५
आम्नायोक्तं यदंभोभवनमनलतस्तच्च सत्यं विभोर्य-
त्सर्गादौ भूतरूपादभवदनलतः पुष्करं भूतरूपम् ।
आनन्दैकस्वरूपात्त्वदधियदभूत्कृष्णसेवारसाब्धिः
आनन्दैकस्वरूपस्तदखिलमुचितं हेतुसाम्यं हि कार्ये॥६॥
स्वामिञ्छ्रीवल्लभाग्ने क्षणमपि भवतः सन्निधाने कृपातः
प्राणप्रेष्ठव्रजाधीश्वरदनादिदृक्षार्तितापो जनेषु ।
यत्प्रादुर्भावमाप्नोत्युचिततरमिदं यत्तु पश्चादपीत्थं
दृष्टेऽप्यस्मिन्मुखेंदौ प्रचुरतमुदेत्येव तच्चित्रमेतत् ॥७॥
अज्ञानाद्यंधकारप्रशमनपटुताख्यापनाय त्रिलोक्या-
मग्नित्वं वर्णितं ते कविभिरपि सदा वस्तुतः कृष्ण एव ॥
प्रादुर्भूतो भवानित्यनुभवनिगमाद्युक्तपानैरेवत्य
त्वां श्रीश्रीवल्लभे मे निखिलबुधजना गोकुलेशं भजन्ते॥
इति श्रीमद्विट्ठलदीक्षितविरचितं श्रीवल्लभाष्टकं सं० ॥२२॥

## अथ स्फुरत्कृष्णप्रेमामृतस्तोत्रम् ।

स्फुरत्कृष्णप्रेमामृतरसभरेणातिभरिता
विहारान्कुर्वाणा व्रजपतिविहाराब्धिषु सदा ।
प्रिया गोपीभर्तुः स्फुरतु सततं वल्लभ इति
प्रथावत्यस्माकं हृदि सुभगमूर्तिः सकरुणा ॥ १ ॥
श्रीभागवतप्रतिपदमणिवरभावांशुभूषिता मूर्तिः ।
श्रीवल्लभाभिधानस्तनोतु निजदास्यसौभाग्यम् ॥२॥
मायावादतमो निरस्य मधुभित्सेवाख्यवर्त्माद्भुतं
श्रीमद्गोकुलनाथसंगमसुधासंप्रापकं तत्क्षणात्
दुःप्रापं प्रकटीचकार करुणारागादिसंमोहनः
स श्रीवल्लभभानुरुल्लसति यः श्रीवल्लवीशांवरः ॥३॥
क्वचित्पांडित्यं चेन्न निगमगतिः सापि यदि न
क्रिया सा साऽपि स्याद्यदि न हरिमार्गे परिचयः ।
यदि स्यात्सोऽपि श्रीव्रजपतिरतिर्नेति निखिलै-
र्गुणैरन्यः को वा विलसति विना वल्लभवरम् ॥ ४ ॥
मायावादिकरींद्रदर्पदलने नास्येंदुराजोद्गत-
श्रीमद्भागवताख्यदुर्लभसुधावर्षेण वेदोक्तिभिः ।
राधावल्लभसेवया तदुचितप्रेम्णोपदेशैरपि
श्रीमद्वल्लभनामधेयसदृशो भावी न भूतोऽस्त्यपि॥५॥
यदंघ्रिनखमंडलप्रसृतवारिपीयूषयुग-

वरांगहृदयैः कलिस्तृणमिवेह तुच्छीकृतः ।
व्रजाधिपतिरिन्दिराप्रभृतिमृग्यपादांबुजः
क्षणेन परितोषितस्तदनुगत्वमेवास्तु मे ॥ ६ ॥
अघौघतमसावृतं कलिभुजंगमासादितं
जगद्विषयसागरे पतितमस्वधर्मे रतम् ।
यदीक्षणसुधानिधिः समुदितोऽनुकंपामृता-
दमृत्युमकरोत्क्षणादरणमस्तु मे तत्पदम् ॥ ७ ॥

इति श्रीविट्ठलेश्वरविरचितं स्फुरत्कृष्णप्रेमामृतस्तोत्रं संपूर्णम् ॥ २३ ॥

---

## ॥ अथ यमुनाष्टपदी ॥

नमो देवि यमुने नमो देवि यमुने
हर कृष्णमिलनांतरायम् ।
निजनाथमार्गदायिनि कुमारी-
कामपूरिके कुरु भक्तिरायम् ॥ १ ॥ ध्रुवपदम् ॥
मधुपकुलकलितकमलीवलीव्य-
पदेशधारित श्रीकृष्णयुतभक्तहृदये ।
सततमतिशायितहरिभावना-
जाततत्साद्रूप्यगदितहृदये ॥ १ ॥
निजकूलभवविविधतरुकुसुम-

युतनीरशोभया विलसदलिवृंदे ।
स्मारयासि गोपीवृंदपूजित-
सरसमीशवपुरानंदकंदे ॥ २ ॥
उपरि बलदमलकमलारुण-
द्युतिरेणुपरिमलितजलभरेणामुना ।
व्रजयुवतिकुचकुंभकुंकुमारुण-
मुरः स्मारयसि मारपितुरधुना ॥ ३ ॥
अधिरजनि हरिविहृतिमीक्षितुं
कुवलयाभिधसुभगनयनान्युशति तनुषे ।
नयनयुगमल्पमिति बहुतराणि
च तानि रसिकतानिधितया कुरुषे ॥ ४ ॥
रजनिजावरजनितरागरंजि-
तनयनपंकजैरहनि हरिमीक्षसे ।
मकरंदभरमिषेणानंदपूरिता
सततमिह हर्षाश्रु मुंचसे ॥ ५ ॥
तटगतानेकशुकसारिकामुनि-
गणस्तुतविविधगुणसीदुसागरे ।
संगता सततमिह भक्तजन-
तापहृती राजसे रासरससागरे ॥ ६ ॥
रतिभरश्रमजलोदितक्रम-

लपरिमलव्रजयुवतिमोदे ।
ताटंकचनसुनिरस्तसंगी-
तयुतमदमुदितमधुपकृतविनोदे ॥ ७ ॥
निजव्रजजनावनात्तगो-
वर्द्धने राधिकाहृदयगतहृदयकमले ।
रतिमतिशायितरसविट्ठलस्याशु
कुरु वेणुनिनदाह्वानसरले ॥ ८ ॥

॥ श्लोकौ ॥

व्रजपरिवृढवल्लभे कदात्व-
च्चरणसरोरुहमीक्षणास्पदं मे ।
तव तटमतवालुकाः कदाहं
सकलनिजांकगता मुदा करिष्ये ॥ १ ॥
वृंदावने चारुबृहद्वने म-
न्मनोरथं पूरय सूरसूते ।
दृग्गोचरः कृष्णविहार एव
स्थितिस्त्वदीये तट एव भूयात् ॥ २ ॥

इति श्रीविट्ठलेश्वरविरचिता यमुनाष्टपदी समाप्ता ॥२४॥

॥ अथ भुजंगप्रयाताष्टकम् ॥

सुधाधामनैजाधराधारवेणुं
करागैरुदग्रैरतिव्यग्रशीलैः ।
सदा पूरयंश्चारयन् गोवरूथान
पुरः प्रादुरास्तां ममाभीरवीरः ॥ १ ॥
यशोदायशोदानदक्षांबुजाक्ष
प्रतीपप्रमादप्रहाणप्रवीण ।
निजापांगसंगोद्भवानंगगोपां-
गनापांगनृत्यांगणीभूतदेह ॥ २ ॥
सदाराधिकाराधिकासाधिकाय
प्रतापप्रसादप्रभो कृष्णदेव ।
अनंगीकृतानंगसेव्यत्तरंग
प्रविष्टप्रतापाघहन्मे प्रसीद ॥ ३ ॥
रमाकांत शांतप्रतीपांत मेंतः-
स्थिरीभूतपादांबुजस्त्वं भवाशु ।
सदा कृष्णकृष्णेति नाम त्वदीयं
विभो गृह्णतो हे यशोदाकिशोर ॥ ४ ॥
स्फुरद्रंगभूमिष्ठमंचोपविष्टो-
च्छलच्छत्रपक्षे भयं चानिनीषो ।
आलिव्रातजुष्टोत्तमक्षरश्री-

मनोमंदिर त्वं हरे मे प्रसीद ॥ ५ ॥
स्मरस्मेर कस्मात्त्वमस्मात्स्वतो न
स्मरस्यंबुजस्मेरनेत्रानुकंपिन् ।
स्मितोद्भावितानंगगोपांगनांगो-
ल्लसत्स्वांगसत्संगलंभेश पाहि ॥ ६ ॥
रमाराम रामामनोहारिवेशो
द्धतक्षोणिपालौघपापक्षयेश ।
दरोत्फुल्लपंकेरुहस्मेरहास
प्रपन्नार्तिहन्नंदसूनो प्रसीद ॥ ७ ॥
कुरंगीदृशामंगसंगेन शश्व-
न्निजानंददानंदकंदातिकाल ।
कलिन्दोद्भवोद्भूतपंकेरुहाक्ष
स्वभक्तानुरक्ताक्तपाद प्रसीद ॥ ८ ॥
भुजंगप्रयाताष्टकेनानुयातो
भुजंगे शयानं हरिं संस्तवीति ।
रतिस्तस्य कृष्णे भवत्याशु नित्या ।
किमन्यैः फलैः फल्गुभिः सेवकस्य ॥ ९ ॥

इति श्रीविठ्ठलेश्वरविरचितं भुजंगप्रयाताष्टकं सं० ॥ २५ ॥

## ॥ अथ राधाप्रार्थनाचतुःश्लोकी ॥

कृपयति यदि राधा बाधिताशेषबाधा
किमपरमवशिष्टं पुष्टिमर्यादयोर्मे ।
यदि वदति च किञ्चित्स्मेरहासोदितश्री-
द्विजवरमणिपंक्त्या मुक्तिशुक्त्या तदा किम्॥१॥

श्यामसुन्दर शिखंडशेखर
स्मेरहास्य मुरलीमनोहर ।
राधिकारसिक मां कृपानिधे
स्वप्रियाचरणकिंकरीं कुरु ॥ २ ॥

प्राणनाथ वृषभानुनंदिनी-
श्रीमुखाब्जरसलोलषट्पद ।
राधिकापदतले कृतस्थिति-
स्त्वां भजामि रसिकेन्द्रशेखर ॥ ३ ॥

संविधाय दशने तृणं विभो
प्रार्थये व्रजमहेन्द्रनंदन ।
अस्तु मोहन तवातिवल्लभा
जन्मजन्मनि मदीश्वरी प्रिया ॥ ४ ॥

इति श्रीविठ्ठलेश्वरविरचिता राधाप्रार्थनाचतुः-
श्लोकी संपूर्णा ॥ २६ ॥

## अथ गोकुलाष्टकम् ।

श्रीमद्गोकुलसर्वस्वं श्रीमद्गोकुलमण्डनम् ।
श्रीमद्गोकुलदृक्तारा श्रीमद्गोकुलजीवनम् ॥ १ ॥
श्रीमद्गोकुलमात्रेशः श्रीमद्गोकुलपालकः ।
श्रीमद्गोकुललीलाब्धिः श्रीमद्गोकुलसंश्रयः ॥ २ ॥
श्रीमद्गोकुलजीवात्मा श्रीमद्गोकुलमानसः ।
श्रीमद्गोकुलदुःखघ्नः श्रीमद्गोकुलवीक्षितः ॥ ३ ॥
श्रीमद्गोकुलसौन्दर्यं श्रीमद्गोकुलसत्फलम् ।
श्रीमद्गोकुलगोप्राणः श्रीमद्गोकुलकामदः ॥ ४ ॥
श्रीमद्गोकुलराकेशः श्रीमद्गोकुलतारकः ।
श्रीमद्गोकुलपद्मालिः श्रीमद्गोकुलसंस्तुतः
श्रीमद्गोकुलसंगीतः श्रीमद्गोकुललास्यकृत् ।
श्रीमद्गोकुलभावात्मा श्रीमद्गोकुलपोषकः ॥ ६ ॥
श्रीमद्गोकुलहृत्स्थानं श्रीमद्गोकुलसंवृतः ।
श्रीमद्गोकुलदृक्पुष्टः श्रीमद्गोकुलमोदितः ॥ ७ ॥
श्रीमद्गोकुलगोपीशः श्रीमद्गोकुललालितः ।
श्रीमद्गोकुलेभोग्यश्रीः श्रीमद्गोकुलसर्वकृत् ॥ ८ ॥
इमानि श्रीगोकुलशनामानि वदने मम ।
वसंतु संततं चैव लीला च हृदये सदा ॥ ९ ॥
इति श्रीविठ्ठलेश्वरविरचितं गोकुलाष्टकं संपूर्णम् ॥ २७ ॥

## ॥ अथ श्रीकुलेशाष्टकम् ॥

नंदगोपभूपवंशभूषणं विदूषणं
भूमिभूतिभूरिभाग्यभाजनं भयापहम् ।
धेनुधर्मरक्षणावतीर्णपूर्णविग्रहम्
नीलवारिवाहकांतिगोकुलेशमाश्रये ॥ १ ॥

गोपबालसुन्दरी गणावृतं कलानिधिं
रासमण्डलीविहारकारिकामसुंदरम् ।
पद्मयोनिशंकरादिदेववृन्दवंदितं
नीलवारिवाहकान्तिगोकुलेशमाश्रये ॥ २ ॥

गोपराजरत्नराजिमंदिरानुरिङ्गणं
गोपबालबालिकाकलानुरुद्धगायनम् ।
सुंदरीमनोजभावभाजनाम्बुजाननं
नीलवारिवाहकान्तिगोकुलेशमाश्रये ॥ ३ ॥

कंसकेशिकुंजराजदुष्टदैत्यदारणम्
चेन्द्रसृष्टवृष्टिवारिवारणोद्धृताचलम् ।
कामधेनुकारिताभिधानगानशोभितं
नीलवारिवाहकान्तिगोकुलेशमाश्रये ॥ ४ ॥

गोपिकागृहांतगुप्तगव्यचौर्यचंचलं
दुग्धभाण्डभेदभीतलज्जितास्यपंकजम् ।
धेनुधूलिधूसरांगशोभिहारनूपुरं

नीलवारिवाहकान्तिगोकुलेशमाश्रये ॥ ५ ॥
वत्सधेनुगोपबालभीषणास्यवन्हिपं
केकिपिच्छकल्पितावतंसशोभिताननम् ।
वेणुवादमत्तघोषसुन्दरीमनोहरं
नीलवारिवाहकान्तिगोकुलेशमाश्रये ॥ ६ ॥
गर्वितामरेन्द्रकल्पकल्पितान्नभोजनं
शारदारविन्दवृन्दशोभिहंसजारतम् ।
दिव्यगन्धलुब्धभृङ्गपारिजातमालिनं
नीलवारिवाहकान्तिगोकुलेशमाश्रये ॥ ७ ॥
वासरावसानगोष्ठगामिगोगणानुगं
धेनुदोहदेहगेहमोहविस्मयक्रियम् ।
स्वीयगोकुलेशदानदत्तभक्तरक्षणं
नीलवारिवाहकान्तिगोकुलेशमाश्रये ॥ ८ ॥

इति श्रीरघुनाथ(जी)कृतश्रीगोकुलेशाष्टकं सपूर्णम् ॥ २८ ॥

## ॥ अथ नामरत्नाख्यस्तोत्रम् ॥

यन्नामार्कोदयात्पापध्वांतराशिः प्रशाम्यति ॥ १ ॥
विकसंति हृदब्जानि तन्नामानि सदा श्रये ॥ १ ॥
अनुष्टुभमिहच्छंद ऋषिरग्निकुमारजः ।
सर्वशक्तिसमायुक्तो देवः श्रीवल्लभाभिधः ॥ २ ॥

विनियोगः समस्तेष्टसिद्ध्यर्थे विनिरूपितः ।
श्रीविठ्ठलः कृपासिन्धुर्भक्तवश्योऽतिसुंदरः ॥ ३ ॥
कृष्णलीलारसाविष्टः श्रीमान्वल्लभनंदन ।
दुर्दृश्यो भक्तसंदृश्यो भक्तिगम्यो भयापहः ॥ ४ ॥
अनन्यभक्तहृदयो दीनानाथैकसंश्रयः ।
राजीवलोचनो रासलीलारसमहोदधिः ॥ ५ ॥
धर्मसेतुर्भक्तिसेतुः सुखसेव्यो व्रजेश्वरः ।
भक्तशोकापहः शान्त सर्वज्ञः सर्वकामदः ॥ ६ ॥
रुक्मिणीरमणः श्रीशो भक्तरत्नपरीक्षकः ।
भक्तरक्षैकदक्षः श्रीकृष्णभक्तिप्रवर्तकः ॥ ७ ॥
महासुरतिरस्कर्ता सर्वशास्त्रविदग्रणीः ।
कर्मजाड्यभिदुष्णांशुर्भक्तनेत्रसुधाकरः ॥ ८ ॥
महालक्ष्मीगर्भरत्न कृष्णवर्त्मसमुद्भवः ।
भक्तचिंतामणिर्भक्तिकल्पद्रुमनवांकुर ॥ ९ ॥
श्रीगोकुलकृतावासः कालिन्दीपुलिनप्रियः ।
गोवर्धनागमरतः प्रियवृन्दावनाचलः ॥ १० ॥
गोवर्धनाद्रिमखकृन्महेन्द्रमदभित्प्रियः ।
कृष्णलीलैकसर्वस्वः श्रीभागवतभाववित् ॥ ११ ॥
पितृप्रवर्तितपथप्रचारसुविचारकः ।
व्रजेश्वरप्रीतिकर्ता तामसत्रणभोजनः ॥ १२ ॥

बाललीलादिसुप्रीतो गोपीसम्बन्धिसत्कथः ।
अतिगम्भीरतात्पर्यः कथनीयगुणाकरः ॥ १३ ॥
पितृवंशोदधिविधुः स्वानुरूपसुतप्रसूः ।
दिक्चक्रवर्ती सत्कीर्तिर्महोज्ज्वलचरित्रवान् ॥ १४ ॥
अनेकक्षितिपश्रेणीमूर्धासक्तपदाम्बुजः ।
विप्रदारिद्र्यदावाग्निर्भूदेवाग्निपूजकः ॥ १५ ॥
गोब्राह्मणप्राणरक्षापरः सत्यपरायणः ।
प्रियश्रुतिपथः शश्वन्महामखकरः प्रभुः ॥ १६ ॥
कृष्णानुग्रहसंलभ्यो महापतितपावनः ।
अनेकमार्गसंक्लिष्टजीवस्वास्थ्यप्रदो महान् ॥ १७ ॥
नानाभ्रमनिराकर्ता भक्ताज्ञानभिदुत्तमः ।
महापुरुषसत्ख्यातिर्महापुरुषविग्रहः ॥ १८ ॥
दर्शनीयतमो वाग्मी मायावादनिरासकृत् ।
सदा प्रसन्नवदनो मुग्धस्मितमुखाम्बुजः ॥ १९ ॥
प्रेमार्द्रदृग्विशालाक्षः क्षितिमण्डलमण्डनः ।
त्रिजगद्व्यापिसत्कीर्तिर्धवलीकृतमेचकः ॥ २० ॥
वाक्सुधाकृष्टभक्तान्तःकरणः शत्रुतापनः ।
भक्तसम्प्रार्थितकरो दासदासीप्सितप्रदः ॥ २२ ॥
अचिंत्यमहिमाऽमेयो विस्मयास्पदविग्रहः ।
भक्तक्लेशासहः सर्वसहो भक्तकृते क्षमः ॥ २३ ॥

आचार्यरत्नं सर्वानुग्रहकृन्मंत्रवित्तमः ।
सर्वस्वदानकुशलो गीतसंगीतसागरः ॥ २३ ॥
गोवर्धनाचलसखो गोपगोगोपिकाप्रियः ।
चिंतितज्ञो महाबुद्धिर्जगद्वन्द्यपदांबुजः ॥ २४ ॥
जगदाश्चर्यरसकृत्सदा कृष्णकथाप्रियः ।
सुखोदर्ककृतिः सर्वसन्देहच्छेददक्षिणः ॥ २५ ॥
स्वपक्षरक्षणे दक्षः प्रतिपक्षभयंकरः ।
गोपिकाविरहाविष्टः कृष्णात्मा स्वसमर्पकः ॥ २६ ॥
निवेदिभक्तसर्वस्वशरणाध्वप्रदर्शकः ।
श्रीकृष्णानुगृहीतैकप्रार्थनीयपदाम्बुजः ॥ २७ ॥
इमानि नामरत्नानि श्रीविठ्ठलपदाम्बुजम् ।
ध्यात्वा तदेकशरणो यः पठेत्स हरिं लभेत् ॥ २८ ॥
यद्यन्मनस्यभिध्यायेत्तत्तदाप्नोत्यसंशयम् ।
नामरत्नाभिधमिदं स्तोत्रं यः प्रपठेत्सुधीः ॥ २९ ॥
तदीयत्वं गृहाणाशु प्रार्थ्यमेतन्मम प्रभो ।
श्रीविठ्ठलपदांभोजमकरन्दजुषोऽनिशम् ॥ ३० ॥

इति श्रीरघुनाथजीविरचितनामरत्नाख्यं स्तोत्रं संपूर्णम् ॥२९

## अथ नवनीतप्रियाष्टकम् ॥

अलकावृतसद्‌लिके
विरचितकस्तूरिकातिलके ।
चपलयशोदाबाले
शोभितमाले मतिर्मेऽस्तु ॥ १ ॥
मुखरितनूपुरचरणे
कटिबद्धक्षुद्रघंटिकाभरणे ।
दीपिकारजकृतभूषण-
भूषितहृदये मतिर्मेऽस्तु ॥ २ ॥
करधृतनवनवनीते
हितकृतजननीविभीषिकाभीते ।
रतिनुद्रहताच्चेतो
गोपीभिर्वश्यतां नीते ॥ ३ ॥
बालदशामतिमुग्धे
चोरितदुग्धे व्रजांगनाभवनात् ।
तदुपालंभवचोभय-
विभ्रमनयने मतिर्मेऽस्तु ॥ ४ ॥
व्रजकर्दमलिप्तांगे
स्वरूपसुषमाजितानंगे ।
कृतनंदांगणरिंगण-

विविधविहारे गतिर्मेऽस्तु ॥ ५ ॥
करवरधृतलघुलकुटे
विचित्रमयूरचन्द्रिकामुकुटे ।
नासागतमुक्तामणि-
जटितविभूषे मतिर्मेऽस्तु ॥ ६ ॥
अभिनन्दनकृतनृत्ये
विरचितनिजगोपिकाकृत्ये ।
आनन्दितनिजभृत्ये
प्रहसनमुदिते मतिर्मेऽस्तु ॥ ७ ॥
कामादपि कमनीये
नमनीये ब्रह्मरुद्राद्यैः ।
निःसाधनभजनीये
भावतनौ मे मतिर्भूयात् ॥ ८ ॥

इति श्रीहरिदासोदितं नवनीतप्रियाष्टकं संपूर्णम् ।

---

## अथ जन्मवैफल्यनिरूपणाष्टकम् ॥

नाश्रितो वल्लभाधीशो न च दृष्टा सुबोधिनी ।
नाराधि राधिकानाथो वृथा तज्जन्म भूतले ॥ १ ॥
न गृहीतं हरेर्नाम नात्माद्यखिलमार्पितम् ।
न कृष्णसेवा विहिता वृथा तज्जन्म भूतले ॥ २ ॥

न लीलाचिंतनं नैव दीनता विरहाद्धरेः ।
न वा कृष्णाश्रयः पूर्णो वृथा तज्जन्म भूतले ॥ ४ ॥
न नीता वार्तया यस्याः साधवो नैव सेविताः ।
न गोविंदगुणा गीता वृथा तज्जन्म भूतले ॥ ४ ॥
न कृष्णरूपसौंदर्यमनो नैव विरागिता ।
न दुःसंगपरित्यागो वृथा तज्जन्म भूतले ॥ ५ ॥
न भक्तिः पुष्टिमार्गीया न निःसाधनता हृदि ।
न विस्मृतिः प्रपंचस्य वृथा तज्जन्म भूतले ॥ ६ ॥
न धर्मपरता नैव धर्ममार्गे मनोगतिः ।
न भक्तिज्ञानवैराग्ये वृथा तज्जन्म भूतले ॥ ७ ॥
न निजस्वामिविरहपरितापो न भावना ।
न दैन्यं परमं यस्य वृथा तज्जन्म भूतले ॥ ८ ॥
इति श्रीहरिदासोदितं जन्मवैफल्यनिरूपणाष्टकं संपूर्णम् ।

---

## अथ कामाख्यदोषविवरणम् ।

दोषेषु प्रथमः कामो विविच्य विनिरूप्यते ।
यस्मिन्नुत्पद्यते तस्य नाशकः सर्वथा मतः ॥ १ ॥
विषयावेशहेतुत्वाद्विक्षेपोत्पत्तिकारणम् ।
रजोगुणसमुत्पन्नो रजःप्रक्षेको मुखे ॥ २ ॥
ब्रह्मावेशविरोधी च सद्बुद्धेर्बाधको मतः ।

सत्कर्मनाशकः सर्वप्राकृतासक्तिसाधकः ॥ ३ ॥
चित्ताशुद्धिनिदानत्वाच्चिदुत्पत्तौ च बाधकः ।
भक्तिमार्गमहाद्वेष्टा वैराग्याभावसाधनात् ॥ ४ ॥
सर्वत्रापरितोषश्चानेन लोभसमुद्भवात् ।
यथाकथञ्चित्सांमुख्येंद्रियवैमुख्यकारकः ॥ ५ ॥
कामलोभौ हरिप्राप्तिप्रतिबन्धकपर्वतौ ।
तावुल्लंघ्य न शक्नोति गंतुं कृष्णांतिकं जनः ॥ ६ ॥
संसारमोहहेतुत्वान्मनोदूषणसाधनम् ।
अतःसेवाविरोधी च यतः सा मनसी मता ॥ ७ ॥
निरोधस्य महाञ्छत्रुरन्यस्फूर्तिकरो यतः ।
गुणगानसपत्नोऽपि न रोचंते गुणा यतः ॥ ८ ॥
वैराग्यसाधकाः सर्वे कामिनस्ते कथं प्रियाः ।
अत एव हि दृश्यंते गुणश्रवणवैरिणः ॥ ९ ॥
क्रोधः स्वकार्यकरणाल्लोभः प्राप्त्याऽपि शाम्यति ।
घृतहोमे वन्हिरिव कामो भोगेन वर्धते ॥ १० ॥
कामेन नाशितमतिः प्रतिषिद्धे प्रवर्तते ।
अगम्यागमने चौर्ये तथैवाभक्ष्यभक्षणे ॥ ११ ॥
यत उत्पद्यते क्रोधो महद्द्रोहसमुद्भवः ।
लोभोऽपि जायते तस्मात्सचार्थविषये भवेत् ॥ १२ ॥
सोऽर्थः पञ्चदशानर्थमूलं तत्र प्रवर्तते ।

कामेनैव हि कर्पाण्थं कामिनीषु सतां मतम् ॥१३॥
प्रार्थयंति यतस्तुच्छां प्रवेश्य वदने करम् ।
प्रियव्रतसुतो राजा भ्रष्टः कामेन सत्फलात् ॥१४॥
आग्नीध्रो विषयावेशादूर्वशीलोकमापितः ।
कामेन कश्यपो दैत्योत्पादने हेतुतां गतः ॥ १५ ॥
निवृत्तसंध्यानियमः पत्नीप्रार्थनमोहितः ।
कामेन च शिवः कृष्णयुवतीरूपवंचितः ॥ १६ ॥
कामेन नारदः षष्ठिपुत्रानजनयत्स्वतः ।
गर्वाभावाय हरिणा दत्तः कामो महाशनः ॥ १७ ॥
कामेन भरतस्यापि हरिणत्वं भवांतरे ।
पुरंजनोऽपि कामेन स्त्रीयोनिमुपलब्धवान् ॥ १८ ॥
कामेन वेदगर्भोऽपि स्वसुतायां तथाऽकरोत् ।
तेनैव रावणो बुद्धिं रमायामन्यथाऽकरोत् ॥ १९ ॥
एवं हि बहवो नष्टाः कामेनैव हि साधवः ।
भक्तिमार्गे विरोधस्तु तत्र कामकृतो महान् ॥ २० ॥
कामिनः फलवांच्छातः शरणं नैव सिद्ध्यति ।
सापेक्षस्य तु सर्वत्र दुर्लभं हि समर्पणम् ॥ २१ ॥
तदभावे तदीयत्वं सर्वथैव हि दुर्लभम् ।
साधारण्येन बुद्धिः स्यात्तेन लीलास्थितेष्वपि ॥२२॥
कामलेन यथा पीतप्रतीतिरखिले भवेत् ।

पश्चाद्यात्यामतः प्रोक्तं हृद्रोगत्वं शुकैरपि ॥ २३ ॥
दोषबुद्धिः कामिनस्तु भवेल्लीलाकृतो हरेः ।
निबन्धे श्रीमदाचार्यैरत इन्द्रियनिग्रहे ॥ २४ ॥
अत्यागः सर्वथा प्रोक्तो भगवद्भक्तिसाधकः ।
कौतुकार्थमपि त्यागो धर्मार्थमपि वर्जितः ॥ २५ ॥
स्वयमिंद्रियकार्याणीत्युक्त्या धैर्यविभंजनः ।
विवेकस्य विरोध्येव तदस्फुर्तिकरो यतः ॥ २६ ॥
आश्रयस्तु कथं सिध्येन्मनोविक्षेपसंभवात् ।
भक्तिमार्गोपि मूलत्वात्त्यागस्य नहि सिद्ध्यति॥२७॥
बाह्यपक्षे कृष्णयोगः सर्वथा त्वांतरे मतः ।
परं तूभयथा त्यागो मूलमत्र न संशयः ॥ २८ ॥
कामे सति कथं त्यागः सापेक्षस्य प्रसिद्ध्यति ।
तस्माद्विचार्य तद्रूपं दुरतिक्रमणं स्वतः ॥ २९ ॥
शरणीकरणीयं श्रीनिजाचार्यपदांबुजम् ।
साधनानामभावेऽपि स्वबलाऽखिलसाधनम् ॥३०॥
तत एव च निस्तारो दोषपोषयुतात्मनाम् ।
नान्या गतिर्गोकुलेशभजनानंदकांक्षिणाम् ॥ ३१ ॥
इति श्रीहरिदासविरचितं कामाख्यदोषविवरणं संपूर्णम् ॥

॥ अथ वल्लभशरणाष्टकम् ॥

निःसाधनजनोद्धारकरणप्रकटीकृतः ।
गोकुलेशस्वरूपः श्रीवल्लभः शरणं मम ॥ १ ॥
भजनानंददानार्थं पुष्टिमार्गप्रकाशकः ।
करुणावरणीयः श्रीवल्लभः शरणं मम ॥ २ ॥
स्वामिनीभावसंयुक्तभगवद्भावभावितः ।
अत्यलौकिकमूर्तिः श्रीवल्लभः शरणं मम ॥ ३ ॥
श्रीकृष्णवदनानन्दो वियोगानलमूर्तिमान् ।
भक्तिमार्गाब्जभानुः श्रीवल्लभः शरणं मम ॥ ४ ॥
रासलीलारसभरसमाक्रांताऽखिलांगभृत् ।
भावरूपाखिलांगः श्रीवल्लभः शरणं मम ॥ ५ ॥
श्रीभागवतभावार्थाविर्भावार्थावतारितः ।
स्वामिसंतोषहेतुः श्रीवल्लभः शरणं मम ॥ ६ ॥
वल्लवीवल्लभांतःस्थलीलानुभववल्लभः ।
अन्यास्फुरणरूपः श्रीवल्लभः शरणं मम ॥ ७ ॥
जितांभोजपदांभोजविभूषितवसुंधरः ।
सदा गोवर्धनस्थः श्रीवल्लभः शरणं मम ॥ ८ ॥
अनन्यस्तन्मना नित्यं पठेद्यः शरणाष्टकम् ।
स लभेत्साधनाभावयुक्तोऽप्येतत्पदाश्रयः ॥ ९ ॥
इति श्रीहरिरायजीविरचितं श्रीवल्लभशरणाष्टकं संपूर्णम् ॥

## ॥ अथ वल्लभपञ्चाक्षरस्तोत्रम् ॥

श्रीवल्लवीवल्लभास्य त्रियोगाग्ने कृपाकर ।
अलौकिकानिजानन्द श्रीवल्लभ तवास्म्यहम् ॥ १ ॥
कृष्णाधरसुधाधारभारितावयवावृत ।
श्रीभागवतभावाब्धे श्रीवल्लभ तवास्म्यहम् ॥ २ ॥
भावात्मकस्वरूपार्तिभावसेवाप्रदर्शक ।
भाववल्लभ्यपादाब्ज श्रीवल्लभ तवास्म्यहम् ॥ ३ ॥
करुणायुतदृक्पातपातपातकनाशक ।
निःसाधनजनाधीश श्रीवल्लभ तवास्म्यहम् ॥ ४ ॥
मधुरास्यातिमधुरदृगंत मधुराधर ।
स्वरूपमधुराकार श्रीवल्लभ तवास्म्यहम् ॥ ५ ॥
दीनतामात्रसंतुष्ट दीनतामार्गबोधक ।
दीनतापूर्णहृदय श्रीवल्लभ तवास्म्यहम् ॥ ६ ॥
अंगीकृतकृतानेकापराधविहातिक्षम ।
गृहीतहस्तनिर्वाह श्रीवल्लभ तवास्म्यहम् ॥ ७ ॥
अशेषहरिदासैकसेवितस्वपदांबुज ।
अदेय फलदानार्थं श्रीवल्लभ तवास्म्यहम् ॥ ८ ॥

इति श्रीहरिदासोक्तं श्रीवल्लभपंचाक्षरस्तोत्रं संपूर्णम् ॥

## अथ वल्लभभावाष्टकम्।

पतिः श्रीवल्लभोऽस्माकं गतिः श्रीवल्लभः सदा।
मतिः श्रीवल्लभे ह्यास्तां रतिः श्रीवल्लभेऽस्तु मे ॥१॥
वृत्तिः श्रीवल्लभायैव कृतिः श्रीवल्लभार्थिनी।
दर्शनं श्रीवल्लभस्य स्मरणं वल्लभप्रभोः ॥ २ ॥
त्वत्प्रसादसुधाघ्राणं त्वदुच्छिष्टरसाग्रहः।
श्रवणं त्वद्गुणानां हि स्मरणं त्वत्पदाब्जयोः ॥३॥
गृणनं तन्महित्वस्य सेवनं करयोर्भवेत्।
त्वत्स्वरूपांतरो भोगो गमनं तव सन्निधौ ॥ ४ ॥
त्वदग्रे सर्वदा स्थानं संगस्त्वत्सेवकैः सदा।
त्वद्वार्ताऽतिरुचिर्निष्ठा भूयात्त्वद्वाक्यमात्रगा ॥ ५ ॥
श्रद्धा त्वदेकसंबंधे विश्वासस्त्वत्पदाब्जयोः।
दास्यं त्वदीयमेवास्तु भूयात्त्वच्चरणाश्रयः ॥ ६ ॥
मस्तके श्रीवल्लभोऽस्तु हृदि तिष्ठतु वल्लभः।
अभितः श्रीवल्लभोऽस्तु सर्वं श्रीवल्लभो मम ॥ ७ ॥
नमः श्रीवल्लभायैव दैन्यं श्रीवल्लभे सदा।
प्रार्थना श्रीवल्लभेऽस्तु तत्पदाधीनता मम ॥ ८ ॥
एतदष्टकपाठेन श्रीवल्लभपदांबुजे।
भवेद्भावो विनायासं भक्तिमार्गवृतात्मनाम् ॥ ९ ॥

इति श्रीहरिदासोक्तं श्रीवल्लभभावाष्टकं संपूर्णम् ॥

## अथ श्रीकृष्णशरणाष्टकम् ।

सर्वसाधनहीनस्य पराधीनस्य सर्वतः ।
पापपीनस्य दीनस्य श्रीकृष्णः शरणं मम ॥ १ ॥
संसारसुखसंप्राप्तिसन्मुखस्य विशेषतः ।
बहिर्मुखस्य सततं श्रीकृष्णः शरणं मम ॥ २ ॥
सदा विषयकामस्य देहारामस्य सर्वथा ।
दुष्टस्वभाववामस्य श्रीकृष्णः शरणं मम ॥ ३ ॥
संसारसर्पदष्टस्य धर्मभ्रष्टस्य दुर्मतेः ।
लौकिकप्राप्तिकष्टस्य श्रीकृष्णः शरणं मम ॥ ४ ॥
विस्मृतस्वीयधर्मस्य कर्ममोहितचेतसः ।
स्वरूपज्ञानशून्यस्य श्रीकृष्णः शरणं मम ॥ ५ ॥
संसारसिंधुमग्नस्य भग्नभावस्य दुष्कृतेः ।
दुर्भावलग्नमनसः श्रीकृष्णः शरणं मम ॥ ६ ॥
विवेकधैर्यभक्त्यादिरहितस्य निरंतरम् ।
विरुद्धकरणासक्तेः श्रीकृष्णः शरणं मम ॥ ७ ॥
विषयाक्रांतदेहस्य वैमुख्यहृतसन्मतेः ।
इंद्रियाश्वगृहीतस्य श्रीकृष्णः शरणं मम ॥ ८ ॥
एतदष्टकपाठेन ह्येतदुक्तार्थभावनात् ।
निजाचार्यपदांभोजसेवको दैन्यमाप्नुयात् ॥ ९ ॥

इति श्रीहरिदासविरचितं श्रीकृष्णशरणाष्टकं संपूर्णम् ॥

## अथ दैन्याष्टकम् ।

श्रीकृष्ण गोकुलाधीश नंदगोपतनूद्भव ।
यशोदागर्भसंभूत मयि दीने कृपां कुरु ॥ १ ॥
व्रजानंद व्रजावास व्रजस्त्रीहृदयस्थित ।
व्रजलीलाकृते नित्यं मयि दीने कृपां कुरु ॥ २ ॥
श्रीभागवतभावार्थरसात्मन् रसिकात्मक ।
नामलीलाविलासार्थं मयि दीने कृपां कुरु ॥ ३ ॥
यशोदाहृदयानंद विहितांगणरिंगण ।
अलकावृतवक्त्राब्ज मयि दीने कृपां कुरु ॥ ४ ॥
विरहार्तिव्रतस्थात्मन् गुणगानश्रुतिप्रिय ।
महादैन्यदयोद्भूत मयि दीने कृपां कुरु ॥ ५
अत्यासक्तजनासक्त परोक्षभजनप्रिय ।
परमानंदसंदोह मयि दीने कृपां कुरु ॥ ६ ॥
निरोधशुद्धहृदय दयितागीतमोहित ।
आत्यंतिकवियोगात्मन्मयि दीने कृपां कुरु ॥ ७ ॥
स्वाचार्यहृदयस्थायिलीलाशतयुतं प्रभो ।
सर्वथा शरणं याते मयि दीने कृपां कुरु ॥ ८ ॥

इति श्रीहरिदासोक्तं दैन्याष्टकं संपूर्णम् ॥

## ॥ अथ पुष्टिमार्गलक्षणानि ॥

सर्वसाधनराहित्यं फलाप्तौ यत्र साधनम् ।
फलं वा साधनं यत्र पुष्टिमार्गः स कथ्यते ॥ १ ॥
अनुग्रहेणैव सिद्धिर्लौकिकी यत्र वैदिकी ।
न यत्नादन्यथा विघ्नः पुष्टिमार्गः सः कथ्यते ॥ २ ॥
स्वरूपमात्रपरता तात्पर्यज्ञानपूर्वकम् ।
धर्मनिष्ठा यत्र नैत्र पुष्टिमार्गः स कथ्यते ॥ ३ ॥
यत्रांगीकरणेनैव योग्यतादिविचारणम् ।
अविलंबः प्रभुकृतः पुष्टिमार्गः स कथ्यते ॥ ४ ॥
यत्र प्रभुकृतं नैव गूढदोषविचारणम् ।
अविलंबः प्रभुकृतः पुष्टिमार्गः स कथ्यते ॥ ५ ॥
न लोकवेदसापेक्षं सर्वथा यत्र वर्तते ।
सापेक्षता स्वामिमुखे पुष्टिमार्गः स कथ्यते ॥ ६ ॥
वरणे दृश्यते यत्र हेतुर्नाणुरपि स्वतः ।
वरणं च निजेच्छातः पुष्टिमार्गः स कथ्यते ॥ ७ ॥
यत्र स्वतंत्रता भक्तेराविर्भावानपेक्षणात् ।
सानुभावस्वरूपत्वं पुष्टिमार्गः स कथ्यते ॥ ८ ॥
लोकवेदभयाभावो यत्र भावातिरेकतः ।
सर्वबाधकतास्फूर्तिः पुष्टिमार्गः स कथ्यते ॥ ९ ॥
संबंधः साधनं यत्र फलं संबंध एव हि ।

सोऽपि कृष्णेच्छया जातः पुष्टिमार्गः स कथ्यते॥१०॥
तत्संबंधिषु तद्भावस्तद्भिन्नेषु विरोधिता ।
उदासीनेषु समता पुष्टिमार्गः स कथ्यते ॥ ११ ॥
विद्यमानस्य देहादेर्न स्वीयत्वेन भावनम् ।
परोक्षेऽपि तदार्थित्वं पुष्टिमार्गः स कथ्यते ॥ १२ ॥
भजने यत्र सेव्यस्य नोपकारकृतिः क्वचित् ।
पोषणं भावगात्रस्य पुष्टिमार्गः स कथ्यते ॥ १३ ॥
भजनस्यापवादो न क्रियते फलदानतः ।
प्रभुणा यत्र तद्भावात्पुष्टिमार्गः स कथ्यते ॥ १४ ॥
यत्र वा सुखसंबंधो वियोगे संगमादपि ।
सर्वलीलानुभावेन पुष्टिमार्गः स कथ्यत ॥ १५ ॥
फले च साधने चैव सर्वत्र विपरीतता ।
फलाभावः साधनस्य पुष्टिमार्गः स कथ्यते ॥ १६ ॥
पश्चात्तापः सदा यत्र तत्संबंधिकृतावपि ।
दैन्योद्भावाय सततं पुष्टिमार्गः स कथ्यते ॥ १७ ॥
आविर्भावाय सापेक्षं दैन्यं यत्र हि साधनम् ।
फलं वियोगजं दैन्यं पुष्टिमार्गः स कथ्यते ॥ १८ ॥
विषयत्वेन तत्त्यागः स्वास्मिन् विषयतास्मृतेः ।
यत्र वै सर्वभावेन पुष्टिमार्गः स कथ्यते ॥ १९ ॥
एवंविधैर्विशेषेण प्रकारैस्तु सदाश्रितैः ।

हृदि धृत्वा निजाचार्यान्पुष्टिमार्गो हि बुध्यताम् ॥२०॥

इति श्रीहरिदासनिरूपितपुष्टिमार्गलक्षणानि संपूर्णानि ॥

॥ अथ चतुःश्लोकी ॥

निजाचार्येषु सततं मनस्तत्प्रियसूनुषु ।
स्थापनीयं न चान्येषु स्वमनसा कदाचन ॥ १ ॥
विधेया कृष्णसेवैव स्वमार्गेण स्वभावतः ।
अन्याश्रयः परित्याज्यो ह्यसमर्पितभक्षणम् ॥ २ ॥
स्वमार्गे वसतामेव सतां संगो विधीयताम् ।
मनसा नाऽसता कार्यो बलवद्बाधकत्वतः ॥ ३ ॥
निवेदनानुसंधानं देहादेरन्ययोगतः ।
जातान्यथाभावबाधाभावाय क्रियतां वशी ॥ ४ ॥

इति श्रीहरिदासोदिता चतुःश्लोकी समाप्ता ॥

॥ अथ स्वप्रभुस्वरूपनिरूपणाष्टकम् ॥

स्वामिनीभावगौरस्य स्वस्वरूपं प्रपश्यतः ।
कटाक्षैर्विठ्ठलेशस्य श्यामताचित्रितं वपुः ॥ १ ॥
स्वास्मिन्नभयभावेन स्वेषामुभयरूपताम् ।
स्पष्टं बोधयितुं गौरश्यामः श्रीविठ्ठलेश्वरः ॥ २ ॥
निजाचार्योदितस्वीयमार्गसेव्यस्वरूपताम् ।
बोधयन्नभयात्माऽयं गौरश्यामो विराजते ॥ ३ ॥

रसस्य द्विविधस्यापि स्वरूपे बोधयन् स्थितिम् ।
ऐक्यं विरुद्धधर्मत्वाद्गौरश्यामः कृपानिधिः ॥ ४ ॥
स्त्रीभावभगवद्भावोभयात्मेति विबोधितुम् ।
स्वस्वरूपं हरिर्गौरश्यामः श्रीविठ्ठलेश्वरः ॥ ५ ॥
भावात्मकत्वतो दृष्टिर्हासारक्तातिस्तथा ।
अतो विलोक्यते गौरश्यामः श्रीविठ्ठलेश्वरः ॥ ६ ॥
निजानंदप्रदानेन व्यवधानं दिवानिशम् ।
न करोति व्रजस्थानामिति श्रीमत्प्रभुस्तथा ॥ ७ ॥
सर्वात्मकामभावात्मस्वरूपं बोधयन्प्रभुः ।
श्रीविठ्ठलेश्वरोऽस्माकं गौरश्यामो विराजते ॥ ८ ॥

इति श्रीहरिदासोदितं स्वप्रभुस्वरूपनिरू-
णाष्टकं संपूर्णम् ॥

## ॥ अथ श्रीकृष्णप्रेमामृतम् ॥

एकदा कृष्णविरहाद्ध्यायन्ती प्रियसङ्गमम् ।
मनोवाष्पानिरासाय जल्पन्तीदं मुहुर्मुहुः ॥ १ ॥
कृष्णः कृष्णेन्दुरानन्दो गोविन्दो गोकुलोत्सवः ।
गोपालो गोपगोपीशो वल्लभेन्द्रो व्रजेश्वरः ॥ २ ॥
प्रत्यहं नूतनतरस्तरुणानन्दविग्रहः ।
आनन्दकसुखस्वामी सन्तोषाक्षयकोषभूः ॥ ३ ॥

आभीराभिनवानन्दः परमानन्दकन्दलः ।
वृन्दावनकलानाथो व्रजानङ्गनवांकुरः ॥ ४ ॥
नयनानन्दकुसुमो व्रजभाग्यफलोदयः ।
प्रतिक्षणातिसुखदो मोहनो मधुरद्युतिः ॥ ५ ॥
सुधानिर्यासनिचयः सुन्दरः शीतलाकृतिः ।
नवयौवनसम्भिन्नश्यामामृतरसार्णवः ॥ ६ ॥
इन्द्रनीलमणिस्वच्छो दलिताञ्जनचिक्कणः ।
इन्दीवरसुखस्पर्शो नीरदस्निग्धसुन्दरः ॥ ७ ॥
कर्पूरागरुकस्तूरीकुङ्कुमाक्ताङ्गधूसरः ।
संकुचितकचग्रस्तोल्लसच्चारुशिखण्डकः ॥ ८ ॥
मत्तालिविभ्रमात्पारिजातपुष्पावतंसकः ।
आननेन्दुजितानन्तपूर्णशारदचन्द्रमाः ॥ ९ ॥
श्रीमल्ललाटपाटीरतिलकालङ्कराञ्जितः ।
लीलोन्नतभ्रूविलासोमदालसत्रिलोचनः ॥ १० ॥
आकर्णारक्तसौन्दर्यं लहरिदृष्टिमन्थरः ।
घूर्णायमाननयनः संवीक्षणविचक्षणः ॥ ११ ॥
अपाङ्गेरितसौभाग्यतरलीकृतलोचनः ।
ईषन्मुद्रितलोलाक्षःसुनासापुटसुंन्दरः ॥ १२ ॥
गण्डप्रान्तोल्लसत्कर्णमकराकृतिकुण्डलः ।
प्रसन्नांगत्ववदनो जगदाल्हादकाननः ॥ १३ ॥

सस्मेराधरलावण्यकाशीकृतादिन्मुखः ।
सिन्दूरारुणसुस्निग्धमाणिक्यदशनच्छदः ॥ १४ ॥
पीयूषाधिकमाध्वीकसूक्तश्रुतिरसायनः ।
त्रिभङ्गललितालितास्तिर्यग्ग्रीवस्त्रैलोक्यमोहनः ॥ १५ ॥
कुंचिताधरसंसक्तकूजद्वेणुविनोदवान् ।
कंकणाङ्गदकेयूरमुद्रिकाविलसद्भुजः ॥ १६ ॥
स्वर्णसूत्रसुविन्यस्तकौस्तुभामुक्तकन्धरः ।
मुक्ताहारलसद्वक्षःस्फुरच्छ्रीवत्सलांच्छनः ॥ १७ ॥
आपीनहृदयो नीपमाल्यवान्बन्धुरोदरः ।
संवीतपीतवसनो रशनाविलसत्कटिः ॥ १८ ॥
अन्तरीयपटीबन्धप्रपदान्दोलिताञ्चलः ।
अरविन्दपदद्वंद्वकलक्काणितनूपुरः ॥ १९ ॥
बन्धूकारुणमाधुर्यसुकुमारपदाम्बुजः ।
नखचंद्रजिताशेषदर्पणेन्द्रमणिप्रभः ॥ २० ॥
ध्वजवज्राङ्कुशाम्भोजराजच्चरणपल्लवः ।
त्रैलोक्याद्भुतसौन्दर्यपरिपाकमनोहरः ॥ २१ ॥
साक्षात्क्रीडाकलामूर्तिः परिहासरसार्णवः ।
यमुनोपवनश्रेणीविहारि व्रजनागरः ॥ २२ ॥
गोपाङ्गनाजनासक्तो वृन्दारण्यपुरन्दरः ।
आभीरनागरीप्राणनायकः कामशेखरः ॥ २३ ॥

यमुनानाविको गोपीपारावारकृतोद्यमः ।
राधावरुन्धनरतः कदम्बवनमन्दिरः ॥ २४ ॥
व्रजयोषित्सदाहृद्यो गोपीलोचनतारकः ।
जीवगानन्दरासिकः पूर्णानन्दकुतूहलः ॥ २५ ॥
गोपिकाकुचकस्तूरीपङ्किलः कोकिलालसः ।
अलक्षितकुटीरस्थोराधासर्वस्वसम्पुटः ॥ २६ ॥
वल्लवीवदनांभोजमधुपानमधुव्रतः ।
निगूढरसविद्गोपीचित्ताह्लादकलानिधिः ॥ २७ ॥
कालिन्दीपुलिनानन्दी क्रीडाताण्वपण्डितः ।
आभीरिकानवानङ्गरङ्गभूमिसुधाकरः ॥ २८ ॥
विदग्धगोपवानिताचित्ताकूतविनोदवान् ।
नानोपायनपाणिस्वगोपनारीगणावृतः ॥ २९ ॥
वांच्छाकल्पतरुः कामकलारसशिरोमणिः ।
कन्दर्पकोटिलावण्यः कोटीन्दुललितद्युतिः ॥ ३० ॥
नवीनमधुरस्नेहः प्रेयसीप्रेमसंचयः ।
गोपीमनोरथाक्रान्तोनाट्यलीलाविशारदः ॥ ३१ ॥
जगत्रयमनोमोहकरो मन्मथमन्मथः ।
गोपसीमन्तिनीशश्वद्भावापेक्षापरायणः ॥ ३२ ॥
प्रत्यङ्गरभसावेशप्रमदाप्राणवल्लभः ।
रासोल्लासमदोन्मत्तो राधिकारतिलम्पटः ॥ ३३ ॥

खेलालीलापरिश्रान्तः स्वेदाङ्कुरचिताननः ।

गोपिकाङ्कलसच्छ्रीमान्मलयानिलसेवितः ॥ ३४ ॥
इत्येवं प्राणनाथस्य प्रेमामृतरसायनम् ।
यः पठेच्छ्रावयेद्वापि सप्रेम्णि प्रमिलेद्ध्रुवम् ॥ ३५ ॥
इति श्रीवल्लभाचार्यविरचितं प्रेमामृतं संपूर्णम् ॥

## ॥ अथ श्रुतिगीता ॥

प्राकृताः श्रुतयः सर्वा भगवन्तमधोक्षजम् ।
स्तुवन्ति दोषनाशाय तत्राविष्टो भवेद्यथा ॥ १ ॥
सत्यो हरिः समस्तेषु भ्रमभातेष्वपि स्थिरः ।
अतः सन्त समस्तार्थं कृष्णमेव विजानते ॥ २ ॥
कथानन्दोक्तिहृदयाः साधनानि न कुर्वते ।
साक्षात्ते पादसंश्लिष्टास्ते किं वाच्या महाशयाः ॥३॥
कृष्ण एव सदा सेव्यो निर्णीतः पञ्चधा बुधैः ।
शरीरदः प्रेरकश्च सुखदः शेषसत्पदः ॥ ४ ॥
कर्मरूपं हरिं केचित् सेवन्ते योगरूपिणम् ।
तेभ्योऽप्यक्षररूपस्य सेवकाः सम्मताः सताम् ।
सर्वत्र भगवांस्तुत्यः सर्वदोषविवाजतः ।
क्रीडार्थमनुकुर्वन्हि सर्वत्रैव विराजते ॥ ६ ॥
गुप्तानन्दा यतो जीवा निरानंदं जगद्यतः ।
पूर्णानन्दो हरिस्तस्माज्जीवैः सेव्यः सुखार्थिभिः ॥७॥

कृष्णे हरौ भगवति परमानन्दसागरः ।
वर्तते नात्र सन्देहः कथा तत्र नियामिका ॥ ८ ॥
असत्सङ्गो न कर्तव्यो भक्तिमार्गस्य बाधकः ।
देहे ह्यनुगुणे कृष्णे नेन्द्रियाणां प्रियं चरेत् ॥ ९ ॥
सर्व एव हरेर्भक्तास्तुल्या यान्मन्यते हरिः ।
अतः कृष्णो यथात्मीयान्मन्यते भजनं तथा ॥ १० ॥
ज्ञानमार्गो भ्रान्तिमूलमतः कृष्णं भजेद्बुधः ।
प्रवर्तकं ज्ञानकाण्डं चित्तशुद्ध्यै यतो भवेत् ॥ ११ ॥
भ्रान्तिमूलतया सर्वसमयानामयुक्तितः ।
न तद्विरोधात्कृष्णाख्यं परं ब्रह्म त्यजेद्बुधः ॥ १२ ॥
जीवानां ब्रह्मरूपत्वाद्दोषा अपि च मानसाः ।
जगच्च सकलं ब्रह्म ततो दोषः कथं हरौ ॥ १३ ॥
सर्वथा सर्वतः शुद्धा भक्ता एव न चापरे ।
अतः शुद्धिमभीप्सद्भिः सेव्या भक्ता न चापरे ॥ १४ ॥
सुवर्णप्रतिमावासौ सर्वानन्दमयोधिराट् ।
सर्वसेव्यो नियन्ता च निर्दुष्टः सर्वथैव हि ॥ १५ ॥
सर्वभावविनिर्मुक्तः पूर्णः क्रीडार्थमुद्गतः ।
निमित्तं तं समाश्रित्य जायन्ते जीवराशयः ॥ १६ ॥
नियन्ता जीवसङ्घस्य हरिस्तेनाणवो मताः ।
जीवा न व्यापकाः क्वापि चिन्मया ज्ञानिनो मताः ॥ १७ ॥

नामरूपप्रपञ्चं हि देवतिर्यङ्नरात्मकम् ।
कृष्णादेव समुद्भूतं लीनं तत्रैव तन्मयम् ॥ १८ ॥
नृणां दुर्गतिमालोक्य ये सेवन्ते दृढव्रताः ।
कृष्णं तद्भ्रुकुटिः कालो न तान् हन्ति कदाचन॥१९॥
अदान्ते मनसि ज्ञानयोगार्थं न यतेद्बुधः ।
गुरुसेवापरो भूत्वा भक्तिमेव सदाभ्यसेत् ॥ २० ॥
सर्वलोकोपकारार्थं कृष्णेन सहितास्तु ते ।
परिभ्रमान्ति लोकानां निस्ताराय महाशयाः ॥२१॥
पुत्रादीन् सम्परित्यज्य कृष्णः सेव्यो न तैः सह ।
तत्सुखं भगवान् दाता ते तु क्लिष्टेऽतिदुखदाः ॥२२॥
परिभ्रमंस्तीर्थनिष्ठो गुरुलब्धहरिस्मृतिः ।
न सेवेत गृहान् दुष्टान् सद्धर्मात्यन्तनाशकान ॥२३॥
सद्बुद्ध्या सर्वथा सद्भिर्न सेव्यमखिलं जगत् ।
भ्रान्त्या सद्बुद्धिरत्रेति सन्तं कृष्णं भजेद्बुधः ॥२४॥
खपुष्पादिसमत्वाद्धि मिथ्याभूतं जगद्यतः ।
अधिष्ठानाच्च सद्भानं तं कृष्णं नियतं भजेत् ॥ २५ ॥
कालादितृणपर्यन्ता न सेव्या मुक्तिमिच्छता ।
दोषत्याजनशक्तो हि सेव्यो दाता गणस्य च ॥२६॥
जीवेषु भगवानात्मा संच्छन्नस्तेन तत्र न ।
भजनं सर्वथा कार्यं ततोऽन्यत्रैव पूजयेत् ॥ २७ ॥

सुखसेवापरो यस्तु सदानन्दं हरिं भजेत् ।
अन्यथा सुखमप्रेप्सुः सर्वथा दुःखमाप्नुयात् ॥ २८ ॥
कृष्णानन्दः परानन्दो नान्यानन्दस्तथाविधः ।
वेदा अपि न तच्छक्ताः प्रतिपादयितुं स्वतः ॥२९॥
इत्येव श्रुतिगीतायाः संक्षेपेण निरूपितः ।
अर्थराशिसमुद्रो हि यथांगुल्या निरूप्यते ॥ ३० ॥

इति श्रीवल्लभाचार्यविरचिता श्रुतिगीता सपूर्णा ॥

## अथ श्रीस्वामिन्यष्टकम् ॥

रहस्यं श्रीराधेत्यखिलनिगमानामिव घनंः ।
निगूढं यद्वाणी जपत सततं जातु न परम् ॥
प्रदोषे हग्मोषे पुलिनगमनायातिमधुरं
वलत्तस्याश्वञ्चच्चरणयुगमास्तां मनसि मे ॥ १ ॥
अमन्दप्रेमार्द्रप्रियकरतलं कुंकुमपिष-
त्कुचद्वन्द्वे वक्षस्यपि च दधती चारु सततम् ।
कृपां कुर्याद्राधा मयि रुचिरहेमाद्रिशिखरो
दितप्रावृण्मेघस्मरहरहरी चूचुकमिषात् ॥ २ ॥
निमन्त्र्य प्रतर्या निजहृदयनाथं निरुपमा
सुकौमार्यैकाकिन्यतिघनवनादात्मभवने ।
विधायान्नं स्वादु स्वयमतिमुदा भोजयति सा ।

मयि प्रीता राधा भवतु हरिसङ्गार्पितमनाः ॥ ३ ॥
विधाय श्यामांसे निजभुजलतामिन्दुवदनं
कटाक्षैः पश्यन्ती कुवलयदलाक्षी मधुपतेः ।
मुदा गायन्ती या मधुरमुरलीजातानिनदा-
नुसारं तारं सा फलतु मम राधावदनयोः ॥ ४ ॥
अमन्दप्रेमार्द्रात्किसलयमयात्कोलशयना-
दुपस्युत्थायाऽजारुणतरकपोलातिरुचिरा ।
गृहं यान्ती श्रान्तिस्थगितगतिरास्याम्बुजगतं
घनीभूतं राधा रसमनुदिनं मे वितरतु ॥ ५ ॥
प्रियेणाक्ष्णा संसूचितनवनिकुञ्जेषु विविध-
प्रसूनैर्निर्मायातिशयरुचिरं केलिशयनम् ।
दिगन्त्येषा गुञ्जन्मधुपमुखरे धारपत्रनी-
श्रिते क्रीडन्ती मे निजचरणदास्यं वितरतु ॥ ६ ॥
कदम्बारूढं या निजपतिमजानन्त्यहनि त-
त्तले कुर्वन्ती स्वाप्रियतमसखीभिः सह कथाम् ।
अकस्मादुद्वीक्ष्य स्फुटतरलहारोरसमिति
स्मितस्मेरव्रीडाननमुदिरदृक् सा मम गतिः ॥ ७ ॥
न मे भूयान्मोक्षो न पुनरमराधीशसदनम्
न योगो न ज्ञानं न विषयसुखं दुःखकदनम् ।
त्वदुच्छिष्टं भोज्यं तव पदजलं पेयमपि त-

द्रजो मूर्ध्नि स्वामिन्यनुसवनमस्तु प्रतिभवम् ॥ ८ ॥

इति श्रीमद्गोपीजनचरणपङ्केरुहयुगा-
नुगत्यानन्दाम्भोनिधिविभृतवाक्कायमनसा ।
मयेदं प्रादुर्भावितमतिसुखं विठ्ठलपदा-
भिधेये मय्येव प्रतिफलतु सर्वत्र सततम् ॥ ९ ॥

॥ इति श्रीविठ्ठलेश्वरविरचितं स्वामिन्यष्टकम् ॥

---

## ॥ अथ दानलीलाष्टकम् ॥

सदा चन्द्रावल्या कुसुमशयनीयादि रचितुं
सहासं प्रोक्ताः स्वप्रणायिग्रहचर्यः प्रमुदिताः ।
निकुञ्जष्वन्योन्यं कृतविविधतल्पेषु सरसां
कथास्वस्वामिन्यासपदि कथयन्ति प्रियतमाम् ॥ १ ॥

अशेषसुकृतोदयैरखिलमङ्गलैर्वेधसा
मनोरथशतैः सदा मनसि भावितैर्निर्मिते ।
अहन्यतिमनोहरे निजगृहाद्विहारेच्छया
सखीशतवृताऽचलद्व्रजवनेषु चन्द्रावली ॥ २ ॥

समुद्ग्रथितमालतीकुरवकादिपुष्पावली-
गलत्परिमलोन्मदभ्रमरयूथसन्नादितम् ।
उदारमतिचित्रितं मृगमदादिभिर्बिभ्रती
मनोभवमदापहं किमपि केशपाशं सखी ॥ ३ ॥

श्यामेन्दोरनुरूपां विधिरचितां तारकामहं मन्ये ।
यत्तत्करनखकिरणा न जातु सख्यस्त्यजन्तीमाम् ॥४॥
कुंकुमसृगमदमलयजचित्रितकुसुमं तदीयधम्मिल्लम् ।
नो किन्तु कुसुमधनुषस्तूणीरमुसार्जितं विधिना ॥ ५ ॥
न धम्मिल्लो मौग्ध्यामृतजलमुचामेघनिचयो
न पुष्पाणीमानि त्रिदशपतिमौर्वीपरिणतिः ।
न मुक्तागुच्छानि प्रकटसुखगात्रः करतरो
न काश्मीरोद्भूता सुभगतररेखा तडिदियम् ॥ ६ ॥
निसर्गसुन्दरोऽप्यालिसूक्ष्मचित्राम्बरान्तरे ।
गूढो भाव इवैतस्याः सोऽदृश्यत विलक्षणः ॥ ७ ॥
मत्समर्पितसिन्दूररेखोपरि परिस्थिता ।
मुक्ताफलावलीमाला सीमन्ते बिभ्रती बभौ ॥ ८ ॥

॥ इति श्रीविट्ठलेश्वरविरचितं दानलीलाष्टकम् ॥

## ॥ अथ द्वितीया चतुःश्लोकी ॥

सदा सर्वात्मभावेन भजनीयो व्रजेश्वरः ।
करिष्यति स एवास्मदैहिकं पारलौकिकम् ॥ १ ॥
अन्याश्रयो न कर्तव्यः सर्वथा बाधकस्तु सः ।
स्वकीये स्वात्मभावाच्च कर्तव्यः सर्वथा सदा ॥ २ ॥
सदा सर्वात्मना कृष्णः सेव्यः कालादिदोषनुत् ।

तद्भक्तेषु च निर्दोषभावेन स्थेयमादरात् ॥ ३ ॥
भगवत्येव सततं स्थापनीयं मनः स्वयम् ।
कालोऽयं कठिनोऽपि श्रीकृष्णभक्तान्न बाधते ॥४॥

इति श्रीविट्ठलेश्वरोक्ता द्वितीया चतुःश्लोकी समाप्ता ।

## अथ वृत्रचतुःश्लोकी ॥

अहं हरे ! तव पादैकमूलदासानुदासो भविताऽस्मि भूयः । मनः स्मरतासुनिर्गुणानां गृहीतवाक् कर्म करोतु कायः ॥ १ ॥ न नाकपृष्ठं न च परमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम् । न योगसिद्धीरपुनर्भवं वा समञ्जस ! त्वा विरहय्य काङ्क्षे ॥ २ ॥ अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्त्ताः । प्रियं प्रियेवाव्युषितं विषण्णा मनोऽरविन्दाक्ष ! दिदृक्षते त्वाम् ॥ ३ ॥ ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः । त्वन्माययाऽऽत्मात्मजदारगेहेष्वासक्तचित्तस्य न नाथ ! भूयात् ॥ ४ ॥

॥ इति श्रीमद्भागवतस्था वृत्रासुरचतुःश्लोकी समाप्ता ॥

॥ अथ वृत्रचतुःश्लोकीकारिकाः ॥

पूर्वमिन्द्रं प्रति प्राह ततो भक्त्याऽग्रतो हरिम् ।
दृष्ट्वा तत् प्रार्थयामास पुष्टिर्दृष्टफला यतः ॥ १ ॥
आद्ये तु पुष्टिमार्गीयो धर्मः स्मरणकीर्तने ।
सेवा चेति त्रयं तेन प्रार्थितः स निरूप्यते ॥ २ ॥
आत्मनश्चाधिकारित्वमुत्तमं दीनभावतः ।
प्रार्थनीयतया तस्य साधनं च कृपोच्यते ॥ ३ ॥ (१)
लौकिको वैदिकश्चार्थस्त्रिविधः प्राकृतैर्गुणः ।
क्रमेण ते भगवतो गुणैः षड्भिर्निराकृतः ॥ १ ॥
स्वर्गभूमिरसैश्वर्यं सात्त्विकादि तु लौकिकम् ।
मोक्षश्च पारमेष्ठ्यं च सिद्धयश्चेति वैदिकम् ॥ २ ॥
प्रवृत्तिधर्मसाध्यत्वात् सामान्यं तत्तु लौकिकम् ।
निवृत्तिधर्मसाध्यत्वाद्विशेषाद्वैदिकं परम् ॥ ३ ॥
प्रत्येकमेव ते चार्था न तु सम्भूय कुत्रचित् ।
भगवत्साखिलात्मत्वाद्भवन्त्येव तथा हि ते ॥ ४ ॥
अतोऽर्थो भगवानेव पुष्टिमार्गेऽङ्गमन्यतः ।
सर्वतो नैरपेक्ष्यं च तथाऽत्रापि निरूप्यते ॥ ५ ॥ (२)
पुष्टिमार्गे हरे रूपदिदृक्षा मनसो हृदि ।
कामो निरूप्यते तत्र दृष्टान्तत्रितयं यथा ॥ १ ॥
द्वितीयं लौकिकं मोक्षमेकं शास्त्रीयमुत्तमम् ।

लौकिकस्त्रिगुणीभूय दृष्टान्तः स्यादलौकिके ॥ ३ ॥
अन्यथैकतरेणापि सिद्धेऽर्थे त्रितयेन किम् ।
क्षुद्रूपो लौकिकः कामो रसरीत्या तु शास्त्रतः ॥२॥
प्रभोस्तु रसरूपत्वात् स्वस्यैकत्वेन चोत्तमः ॥
अयमेव हि दृष्टान्तस्तेनान्ते चैकतोदितः ॥ ४ ॥ (३)

इति श्रीविट्ठलदीक्षितविरचित वृत्रचतुःश्लोकीस्थाद्य-
श्लोकत्रयटीकाकारिकाः समाप्ताः ॥

पुष्टिमार्गे हरेर्दास्यं धर्मोऽर्थो हरिरेव हि ।
कामो हरेर्दिदृक्षैव मोक्षः कृष्णस्य चेद् ध्रुवम् ॥१॥ (४)

इतिं श्रीमद्वल्लभाचार्यविरचिता वृत्रचतुःश्लोकीस्था-
न्तिमश्लोकटीकाकारिका समाप्ता ॥

( एवं वृत्तचतुःश्लोकीटीकास्थाःकारिकाः सन्ति। स्वतन्त्रतया श्रीमद्विट्ठलेश्वरविरचिता वृत्रचतुःश्लोकी नास्त्येवेति विज्ञेयं स्वमार्गीयग्रन्थविद्भिर्विद्वद्भिः । )

---

## ॥ अथ विट्ठलेशस्तवः ॥

न मन्त्रे न तन्त्रे न च ज्ञानसिद्धी-
न वैकुण्ठबुद्धिस्तु वैकुण्ठलोके ।
गतिर्विट्ठलेशो रतिर्विट्ठलेशो
मतिर्विट्ठलेशो सदा मे ममास्तु ॥ १ ॥

पदाम्भोरुहाम्भोविभिन्नार्तितापे
कृपादृक् स्वकैतादृशोदारशीले।
गतिर्विठ्ठलेशे रतिर्विठ्ठलेशे
मतिर्विठ्ठलेशे सदा वै ममास्तु ॥ २ ॥
न नाके वराके न राकेशयाने
पिनाकेशलोके न वा केलिरम्ये।
गतिर्विठ्ठलेशे० ॥ ३ ॥
यदालोकतस्तोकतोऽपि क्षणेन
प्रमुक्तो भवेल्लोकतः शोकतोऽयम्।
गतिर्विठ्ठलेशे०॥ ४ ॥
स्मृतिर्वामतिर्वा कदा वा यदा वा
यथा वा तथा स्यात्पादार्थाः कियन्तः।
गतिर्विठ्ठलेशे० ॥५॥
महामोहदग्धोऽपि कालाग्निदग्धो
विदग्धो भवेत्स्नेहदृष्ट्याऽपि यस्य।
गतिर्विठ्ठलेशे० ॥ ६ ॥
यदङ्गीकृतं जीवमङ्गीकरोति
त्रिभङ्गी स्वयं वेणुरङ्गी प्रभुर्यत्।
गतिर्विठ्ठलेशे० ॥ ७ ॥
शरण्योऽतिधन्यो भवप्रान्तरेण्यो

वरीवर्ति गण्यो यदन्यो न कोऽपि ।
गतिर्विट्ठलेशे० ॥ ८ ॥
सदानन्दरूपः सदानन्दरूपा
त्मनाऽऽनन्दलीलारसं यो ददाति ।
गतिर्विट्ठलेशे० ॥ ९ ॥
न भक्तिर्न मुक्तिर्न वै सर्वशक्ति-
र्विरक्तिर्न युक्तिस्ततोभक्तिरुक्ता ।
गतिर्विट्ठलेशे० ॥ १० ॥
इति श्रीरघुनाथजीकृतौ विट्ठलेशस्तवः समाप्तः ।

॥ अथ वह्निसूनुस्तवः ॥

यः कृष्णसेवार्थमगाधबोधं
जगाद शास्त्रं भगवत्प्रणीतम् ।
निश्चित्य तद्भावमनन्यभावं
तं वह्निसूनुं शरणं प्रपद्ये ॥ १ ॥
यः प्रार्थितो भक्तजनैः समस्तं
करोति कार्यं करुणाकटाक्षः ।
क्षणं विना कृष्णकथां न चास्ति
तं वह्निसूनुं शरणं प्रपद्ये ॥ २ ॥
यो गोकुलं गोपवरिष्ठपुरा

पुराणपुंसं प्रियमेत्य सादरम् ।
चकार वासं कमलानिवासं
तं वह्निसूनुं शरणं प्रपद्ये ॥ ३ ॥
यो रासलीलाकुमुदौषधीशो
भक्तार्थमाविष्कृतगोकुलेशः ।
तिरस्कृतानेकमहासुरेश-
स्तं वह्नि सूनुं शरणं प्रपद्ये ॥ ४ ॥
यः संस्मृतः क्लेशमशेषमस्तं
करोति सुस्थं निजभृत्यवर्गम् ।
तद्दुःखविध्वंसकृतोद्यमः सदा
तं वह्निसूनुं शरणं प्रपद्ये ॥ ५ ॥
यः सर्वदाऽऽस्ते हरिदासवर्ये
गोगोपगोपीजनराजिराजिते ।
शृण्वन् सुगीतानि यशोयुतानि
तं वह्निसूनुं शरणं प्रपद्ये ॥ ६ ॥
यो धर्मरक्षार्थमतिप्रबुद्धै-
र्यज्ञैः समीजे जनकं कृशानुम् ।
भक्त्यैककामः श्रुतितन्त्रविज्ञ-
स्तं वह्निसूनुं शरणं प्रपद्ये ॥ ७ ॥
यो रासलीलामृतसिन्धुवृद्धि

करोति पूर्णेन्दुगणैस्तु पूर्णः ।
भक्तैङ्गितज्ञः शुभवाञ्छितप्रद-
स्तं वह्निसूनुं शरणं प्रपद्ये ॥ ८ ॥
इमं स्तवं यः प्रपठेत्त्वदंघ्रि-
ध्यानैकनिष्ठः शरणप्रालिप्सुः ।
तं भावय श्रेष्ठतमं स्वभक्तं
प्रार्थ्यंत्विदं त्वद्रघुनायकस्य ॥ ९ ॥

इति श्रीरघुनाथजीकृतो वह्निसूनुस्तवः समाप्तः ।

---

॥ अथ श्रीकृष्णचन्द्राष्टकम् ॥

महानीलमेघातिभव्यं सुहासं
शिवब्रह्मदेवादिभिः संस्तुतं च ।
रमामन्दिरं देवनन्दापदाहं
भजे राधिकावल्लभं कृष्णचन्द्रम् ॥ १ ॥
रसं वेदवेदान्तवेद्यं दुरापं
सुगम्यं तदीयादिभिर्दानवघ्नम् ।
चलत्कुण्डलं सोमवंशप्रदीपं
भजे राधिकावल्लभं कृष्णचन्द्रम् ॥ २ ॥
यशोदिसंलालितपूर्णकामं
दृशो रञ्जनं प्राकृतस्थस्वरूपम् ।

दिनान्ते समायान्तमेकान्तभक्तै-
र्भजे राधिकावल्लभं कृष्णचन्द्रम् ॥ ३ ॥
कृपादृष्टिसम्पातसिक्तस्वकुञ्जं
तदन्तः स्थितास्त्रीयसम्यक्दयार्द्रम् ।
पुनस्तत्र तैः सत्कृतैकान्तलीलं
भजे राधिकावल्लभं कृष्णचन्द्रम् ॥ ४ ॥
गृहे गोपिकाभिर्धृते चौर्य काले
तदक्ष्णोश्च निक्षिप्य दुग्धं चलन्तम् ।
तदा तद्वियोगादिसम्पत्तिकारं
भजे राधिकावल्लभं कृष्णचंद्रम् ॥ ५ ॥
चलत्कौस्तुभव्याप्तवक्षःप्रदेशं
महावैजयन्तीलसत्पादयुग्मम् ।
सुकस्तूरिकादीप्तभालप्रदेशं
भजे राधिकावल्लभं कृष्णचन्द्रम् ॥ ६ ॥
गवां दोहने दृष्टराधामुखाब्जं
तदानीं च तन्मेलनव्यग्रचित्तम् ।
समुत्पन्नतन्मानसैकान्तभावं
भजे राधिकावल्लभं कृष्णचन्द्रम् ॥ ७ ॥
अदः कृष्णचन्द्राष्टकं प्रेमयुक्तः
पठेत्कृष्णसांनिध्यमाप्नोति नित्यम् ।

कलौ यः ससंसारदुःखातिरिक्तं
प्रयात्येव विष्णोः पदं निर्भयं तत् ॥ ८ ॥
इति श्रीरघुनाथजीकृते कृष्णचन्द्राष्टकम् ।

---

## अथ श्रीगोपालस्तवः ॥

येन मीनस्वरूपेण वेदाः संरक्षिताः पुरा ।
स एव वेदसंहर्ता गोपालः शरणं मम ॥ १ ॥
पृष्ठे यः कूर्मरूपेण दधार धरणी तलम् ।
स एव सृष्टिसंहर्ता गोपालः शरणं मम ॥ २ ॥
वराहरूपः सम्भूय दंष्ट्राग्रे यो महीं दधौ ।
स भूमिभारहरणो गोपालः शरणं मम ॥ ३ ॥
जग्राह यो नृसिंहस्य रूपं प्रह्लादहेतवे ।
स योद्धुमुद्यतः सम्यग्गोपालः शरणं मम ॥ ४ ॥
येन वामनरूपेण वंचितो बलिभूमिपः ।
स एव गोपनारीभिर्गोपालः शरणं मम ॥ ५ ॥
येनेयं जामदग्न्येन पृथ्वी निःक्षत्रिया कृता ।
स एव क्षत्रियहितो गोपालः शरणं मम ॥ ६ ॥
दशास्यो दाशरथिना येन रामेण मारितः ।
स पञ्चास्यप्राप्तबलो गोपालः शरणं मम ॥ ७ ॥
कालिन्दी कर्षिता येन रामरूपेण कौतुकात् ।

तज्जलक्रीडनासक्तो गोपालः शरणं मम ॥ ८ ॥
येन बौद्धस्वरूपेण लोकाः पाषण्डमर्पिताः ।
स एव पाषण्डहरो गोपालः शरणं मम ॥ ९ ॥
गमिष्यन्ति क्षयं येन राक्षसाः कल्किरूपिणा ।
स राक्षसगतिर्दाता गोपालः शरणं मम ॥ १० ॥
गोवर्धनो गिरिर्येन स्थापितः कुञ्जतत्करे ।
उलूखलेन स नीतो गोपालः शरणं मम ॥ ११ ॥
एकादशरूपनाम्नामावलीं यो लिखेद्धृदि ।
कृष्णप्रसादयुक्तश्च स याति परमां गतिम् ॥ १२ ॥

इति श्रीरघुनाथजीकृतो गोपालस्तवः समाप्तः ॥

## अथ श्रीयमुनाष्टकम् ॥

यया तमीशवशजः समार्पितो बृहद्वनं
मरुच्चलज्जलप्रभूतवीचिविप्रुषां मिषात् ।
तदंघ्रिकञ्जभक्तियुक्तया सुदत्तमार्गया
कलौ कलिन्दनन्दिनी कृपाकुलं करोतु नः ॥ १ ॥
यदम्बुपानमात्रतोऽतिभक्तियुक्तचेतसां
कृतैनसामहो निजस्वभावतः कृपायुता ।
प्रधाव्य धर्मराजतो महद्भयं निवर्त्य सा
कलौ कलिन्दनन्दिनी कृपाकुलं करोतु नः ॥२॥

यदीयनीरकेलितो दधार नन्दनन्दनः
समस्तसुन्दरीजने स्वभावमद्भुतं मुदा ।
परस्परावलोकनं विचर्धन्यमुद्दाष्टितः
कलौ कालिन्दनान्दिनी कृपाकुलं करोतु नः ॥ ३ ॥
यदंघ्रिफुल्लपङ्कजेऽवनप्रभावतः सदा
समस्तभक्तसंग्रहं पुनाति सा जगत्त्रयम् ।
गिरीशधारिसङ्गमप्रबोधसत्सुखप्रदं कलौ
कालिन्दनान्दिनी कृपाकुलं करोतु नः ॥ ४ ॥
ययाऽऽपदश्च दूरतो ज्वलन्ति सम्पदः सदा
वसन्ति नन्दनन्दने दृढा रतिश्च जायते ।
महाष्टसिद्धिदाऽप्यशेषघोरपापसंक्षयः
कलौ कलिन्दनन्दिनी कृपाकुलंकरोतु नः ॥ ५ ॥
यदङ्गतो विनिःसृतस्य पापिनोऽपि शोभया
जगत्त्रयं विमोहितं तदीयकान्तियुक्तया ।
प्रफुल्लसारसा प्रभूतरुद्रदेव संस्तुता
कलौ कालिन्दनन्दिनी कृपाकुलं करोतु नः ॥ ६ ॥
यदीयभक्तसेवनेकृते हरिः प्रसन्नतामवाप
गोपिकापतिः समस्तकामदायिनी ।
तदम्बुमध्यखेलनप्रभूतभावलाञ्जितः,
कलौ कालिन्दनन्दिनी कृपाकुलं करोतु नः ॥ ७ ॥

यदन्तिकस्थवालुकाः प्रयान्ति यत्र भूतले
गृहे गृहे वसन्त्यसौ हरिस्तदन्वगश्च सा ।
यदा तदा सदैव तत्र भक्तवृन्दवन्दिता
कलौ कालिन्दनन्दिनी कृपाकुलं करोतु नः ॥ ८ ॥
हरिप्रिये तवाऽष्टकं सदा पठेत्स शुद्धधी-
र्य एव गोकुलाधिपस्य लेढि सङ्गमं शुभम् ।
पुनः प्रयातितत्सुखं तटस्थरासमण्डलस्थि-
तास्त्रिभङ्गिमोहनं दधाति तद्विचेष्टितम् ॥ ९ ॥
इति श्रीरघुनाथजीकृतं यमुनाष्टकं समाप्तम् ॥

## अथ श्रीविट्ठलस्तोत्रम् ॥

श्रीमद्वल्लभसागरसमुदितकुन्दौघजीवदो नरः ।
विश्वलमुद्धृतदीनो जगति श्रीविठ्ठलो जयति ॥१॥
मायावादतमःकुलनाशनकरणे प्रसिद्धदिननाथः ।
अपरः कृष्णाऽवतारो जगति श्रीविठ्ठलो जयति ॥२॥
श्रीमद्गिरिधरपदयुगसेवनपरिनिष्ठहृत्सरोजश्च ।
वंशस्थापितमहिमा जगति श्रीविठ्ठलो जयति ॥ ३ ॥
श्रीमद्गोकुलहिमरुचिरुचिकरलब्धैकसच्चकोरपदः ।
परिलसदद्भुतचरितो जगति श्रीविठ्ठलो जयति ॥४॥
शारदचन्द्र[illegible] [illegible]कलङ्कः ।

विद्याजितसुरवन्द्यो जगति श्रीविठ्ठलो जयति ॥५॥
गोवर्धनधरामिलनत्यागविधानेऽतिकातरः सुभगः ।
प्रकटितपुष्टिजभक्तिर्जगति श्रीविठ्ठलो जयति ॥ ६ ॥
यज्ञाविधायकचेताः सकलप्रतिपक्षसिन्धुवडवाग्निः ।
कुण्डलशोभितगल्लो जगति श्रीविठ्ठलो जयति ॥७॥
पालितभक्तसमाजो व्रजभुवि विशदीकृतैनवरत्नः ।
वासितगोकुलनगरो जगति श्रीविठ्ठलो जयति ॥ ८ ॥
नित्यं स्तोत्रवरं तद्भक्तिनियुक्तः पठन् स्वकीयाष्टकम् ।
परमपदं लभते स च यः किल निष्ठोऽपि विठ्ठलस्येदम् ॥

इति श्रीमद्देवकीनन्दनात्मजश्रीरघुनाथजीकृतौ
विठ्ठलस्तोत्रं सम्पूर्णम् ।

## ॥ अथ श्रीकृष्णशरणाष्टकम् ॥

द्विदलीकृतदक्खास्यः पन्नगीकृतपन्नगः ।
कृशीकृतकृशानुश्च श्रीकृष्णः शरणं मम ॥ १ ॥
फलीकृतफलार्थी च कुत्सितीकृतकौरवः ।
निर्वातीकृतवातारिः श्रीकृष्णः शरणं मम ॥ २ ॥
कृतार्थीकृतकुन्तीजः प्रपूतीकृतपूतनः ।
कलङ्कीकृतकंसादिः श्रीकृष्णः शरणं मम ॥ ३ ॥

सुखीकृतसुदामा च शंकरीकृतशंकरः।
सितीकृतसरिन्नाथः श्रीकृष्णः शरणं मम ॥ ४ ॥
छलीकृतबलीद्यौयों निधनीकृतधेनुकः।
कन्दर्पीकृतकुब्जादिः श्रीकृष्णः शरणं मम ॥ ५ ॥
महेन्द्रीकृतमाहेयः शिथिलीकृतमैथिलः।
आनन्दीकृतनन्दाद्यः श्रीकृष्णः शरणं मम ॥ ६ ॥
वराकीकृतराकेशो विपक्षीकृतराक्षसः।
सन्तोषीकृतसद्भक्तः श्रीकृष्णः शरणं मम ॥ ७ ॥
जरीकृतजरासन्धः कमलीकृतकार्मुकः।
प्रभ्रष्टीकृतभीष्मादिः श्रीकृष्णः शरणं मम ॥ ८ ॥
श्रीकृष्णः शरणं ममाष्टकमिदं प्रोत्थाय यः सम्पठे-
त्स श्रीगोकुलनायकस्य पदवीं संयाति भूमितले।
पश्यत्येव निरन्तरं तरणिजातीरस्थकेलिं प्रभोः
सम्प्राप्नोति तदीयतां प्रतिदिनं गोपीशतैरावृताम् ॥९॥
इति श्रीदेवकीनन्दनात्मजश्रीरघुनाथजीकृतं श्रीकृष्णशरणा-
ष्टकं सम्पूर्णम्।

॥ अथ श्रीवल्लभचरणविज्ञप्तिः ॥

निजाचार्यपदाम्भोजयद्वयं सर्वसुखावहम्।
वहामि शिरसा नित्यं [illegible] सकलं शुभम् ॥ १ ॥

दुनोमि दीनदीनोऽहं भयाद्यनवसम्भवात् ।
ततो निवर्तयास्मांस्त्वमार्तानामार्तिनाशन ॥ २ ॥
न स्थातुं शक्यते नैव गन्तुं वा गोकुलेश्वर ।
मीनस्येव गतिर्जाता ह्यस्माकं करुणाप्रभो ॥ ३ ॥
खेदे कृतहृदुच्छेदे सुखसम्भेदवर्जिते ।
विगतस्वीयसम्भेदे भवानेव गतिः प्रभो ॥ ४ ॥
न सोढुं शक्यते नाथ धैर्यादिरहितैः स्वकैः ।
दुःखं भयसमुद्भूतं प्रभो त्वं संनिवर्तय ॥ ५ ॥
नाथ त्वत्स्मरणोपायः सर्वपापनिवारकः ।
नेदानीं सम्भवत्येतद्भयात्कोऽत्र गतिर्मम ॥ ६ ॥

इति श्रीहरिदासोक्ता श्रीमद्वल्लभचरणविज्ञप्तिः ।

## ॥ अथ स्वस्वामियुगलाष्टकम् ॥

आसातामेकशरणे विहिताकरणे हृदि ।
स्वामिनौ वल्लभाधीशविट्ठलेशाभिधौ सदा ॥ १ ॥
कृपां प्रकुरुतां दीने स्वत एव कृपाकरौ ।
स्वामिनौ वल्लभाधीशविट्ठलेशाभिधौ सदा ॥ २ ॥
प्रसीदतां मयि श्रीमद्व्रजेशचरणाश्रये ।
स्वामिनौ वल्लभाधीशविट्ठलेशाभिधौसदा ॥ ३ ॥
दास्यं प्रयच्छतां मह्यं समस्तफलमूर्धगम् ।

स्वामिनौ वल्लभाधीशविट्ठलेशाभिधौ सदा ॥ ४ ॥
कदाऽपि मामनन्यं मात्यजेतां निजसेवकम् ।
स्वामिनौ वल्लभाधीशविट्ठलेशाभिधौ सदा ॥ ५ ॥
प्रमेयबलमात्रेण गृह्णीतां मत्करं दृढम् ।
स्वामिनौ वल्लभाधीशविट्ठलेशाभिधौ सदा ॥ ६ ॥
आर्तिं निवारयेतां मे मस्तके हस्तधारणैः ।
स्वामिनौ वल्लभाधीशविट्ठलेशाभिधौ मम ॥ ७ ॥
मन्मूर्द्धनि विराजेतां प्रभु लोकविलक्षणौ ।
स्वामिनौ वल्लभाधीशविट्ठलेशाभिधौ मम ॥ ८ ॥
इति श्रीमद्धरिदासोदितं स्वस्वामिपाणियुगलाष्टकं सम्पूर्णम् ।

## अथ श्रीगोपीजनवल्लभाष्टकम् ।

सरोजनेत्राय कृपायुताय मन्दारमालापरिभूषिताय ।
उदारहासाय लसन्मुखाय नमोऽस्तु गोपीजनवल्लभाय १
आनन्ददादिकदायकाय बकीवकप्राणविनाशकाय ।
मृगेन्द्रहस्ताग्रजभूषणाय नमोऽस्तु गोपीजनवल्लभाय २
गोपालालीकृतकौतुकाय
गोपालकाजीवनजीवनाय ।
भक्तैकगम्याय नवप्रियाय
नमोऽस्तु गोपीजनवल्लभाय ॥ ३ ॥

मन्थानभाण्डाखिलभञ्जनाय
हैयङ्गवीनाशनरञ्जनाय।
गोस्वादुदुग्धामृतपोषिताय नमो-
ऽस्तु गोपीजनवल्लभाय ॥ ४ ॥

कलिन्दजाकूलकुतूहलाय
किशोररूपाय मनोहराय।
पिशङ्गवस्त्राय नरोत्तमाय
नमोऽस्तु गोपीजनवल्लभाय ॥ ५ ॥

धराधराभाय धराधराय
शृङ्गारहारावलिशोभिताय।
समस्त गर्गोक्तिसुलक्षणाय
नमोऽस्तु गोपीजनवल्लभाय ॥ ६ ॥

इभेन्द्रकुम्भस्थलखण्डलाय विदेशवृन्दावनशमण्डनाय।
हंसाय कंसासुरमर्दनाय नमोऽस्तु गोपीजनवल्लभाय ७॥
श्रीदेवकीसूनुविमोक्षणाय क्षत्तोद्धवाक्रूरवरप्रदाय।
गदासिशङ्खाब्जचतुर्भुजाय नमोऽस्तु गोपीजनवल्लभाय ८

इति श्रीहरिदासोक्तं गोपीजनवल्लभाष्टकं सम्पूर्णम्।

॥ अथ श्रीस्मरणाष्टकम् ॥

यदीयसौभाग्यभरेण गोकुल-
स्त्रियो न योग्यानि वचांसि सत्पतेः ।
न मानयामासुरुदारमानसा
स्तदङ्घ्रिसेवासमयं स्मरामि ॥ १ ॥

यद्रूपसौंदर्यवशीकृताशयामृगीगणाः पूजनमादधुर्मुदा ।
हित्वा समीपस्थितभर्तृभीतिं तदङ्घ्रिसेवासमयं स्मरामि२

यद्वेणुनादश्रवणैकजातभावाङ्कुरा देववधूसमूहाः ।
प्रवृद्धभावा मुमुहुः सभर्तृकास्तदङ्घ्रिसेवासमयं स्मरामि३

यत्पादसंचारणजातकाम-
भावायदंकेन नयस्यतल्पाम् ।
शान्ति विचित्रा व्रजभूमिरेषा
तदङ्घ्रिसेवासमयं स्मरामि ॥ ४ ॥

यद्बाललीलाकृतचौर्यजातसंतोषभावा व्रजगोपवध्वः ।
उपालभन्ते समयं यमर्भकं तदङ्घ्रिसेवासमयं स्मरामि ५।

यं गोपनारीगणदर्शनीयलीलं मुदा गोसुतपुच्छकर्षुकम्।
प्रेक्षन्त एवोज्झितगेहकृत्यास्तदङ्घ्रिसेवासमयं स्मरामि

यद्बाहुसंस्पर्शनजातभावरसालवावर्तुलभूतविग्रहः ।
गोवर्धनो वेद न दृष्टिपातं तदङ्घ्रिसेवासमयं स्मरामि ७

यदधरसङ्गतवेणुनिनादं वि[illegible]निर्वादम्

श्रुतवत्यो मुखभक्ष्यागावः ।किं न हि कुरुते तद्गतभावः॥८॥

इति श्रीहरिदासोदितं स्मरणाष्टकं समाप्तम् ।

## ॥ अथ स्वप्रभुविज्ञप्तिः ॥

कपानाथ कृपाकाले किमित्यस्मानुपेक्षसे ।
पदलग्नानार्तिमग्नान् दुष्टभग्नान् विशेषतः ॥ १ ॥
त्वदुपेक्षावशादेव कालकर्मादयोऽखिलाः ।
विदित्वा निर्बलानस्मान् पीडयन्ति क्षणेक्षणे ॥ २ ॥
येषां विराजते मूर्ध्नि पतिर्युष्मद्विधः सदा ।
भवन्ति तेऽपि चेद्दीना हीनता महती प्रभो ॥ ३ ॥
मा विचारय चित्तेऽस्मद्दोषान् दीनदयानिधे ।
सहजो दीनदोषस्तु निवर्त्यो भवतैव हि ॥ ४ ॥
नसाधनैस्त्वदीयाः स्मः किं त्वनुग्रहतस्तव ।
साधनं वा फलं वापि केवलाचार्यसंश्रयः ॥ ५ ॥
गृहदासेषु नैवास्ति गुणदोषविचारणम् ।
प्रभूणामुचितं कर्तुं यतस्तेषां मतिः प्रभुः ॥ ६ ॥
कुसेवका भवन्त्येव न हि स्वामी तथाविधः ।
अतो विधेयमखिलं स्वामित्वमविलोक्य ॥ ७ ॥
कं प्रार्थयेयुः कृपणाः पतिं हित्वाखिलेश्वरम् ।
दासाः स्वदुःखसन्तापमनन्यगतयो यतः ॥ ८ ॥

यद्यप्यनुचिता कर्तुं प्रार्थना सर्वकर्तरि ।
स्वतस्तथाऽपि कार्पण्यं दर्शयामो निजं हरे ॥ ९ ॥
आचार्यं शरणं यातान् सदारातान् स्वतस्त्वया ।
तद्वंशजातानधुना मोपेक्षाविषयान् कुरु ॥ १० ॥
इति श्रीहरिदासविरचिता स्वप्रभुविज्ञप्तिः समाप्ता ।

॥ अथ श्रीपञ्चाक्षरमन्त्रगर्भस्तोत्रम् ॥

दुष्टतमोऽपि दयारहितोऽपि विधर्मविशेषकृतिप्रथितोऽपि॥
दुर्जनसङ्गरतोऽप्यतरोऽपि कृष्ण तवास्मि नचास्मिपरस्य१

लोभरतोऽप्यभिमानयुतोऽपि
परहितकारणकृत्यकरोऽपि ।
क्रोधपरोऽप्यविवेकहतोऽपि
कृष्ण तवास्मि न चास्मि परस्य ॥ २ ॥

कामभयोऽपि गताश्रयणोऽपि
पराश्रयाशयचञ्चलितोऽपि ।
वैषयिकादरसम्बलितोऽपि
कृष्ण तवास्मि न चास्मि परस्य ॥ ३ ॥

उत्तमधैर्यविभिन्नतरोऽपि
निजोदरपोषणहेतुपरोऽपि ।
स्वीकृतमत्सरमोहपरोऽपि

कृष्ण तवास्मि न स्मास्मि परस्य ॥ ४ ॥

भक्तिपथादरमात्रकृतोऽपि
व्यर्थविरुद्धकृतिप्रसृतोऽपि ।
त्वत्पदसन्मुखतापतितोऽपि
कृष्ण तवास्मि न चास्मि परस्य ॥ ५ ॥

संसृतिगेहकलत्ररतोऽपि व्यर्थधनार्जनखेदसहोऽपि ।
उन्मदमानसंसश्रयणोऽपि कृष्ण तवास्मि न चास्मि परस्य ॥ ६ ॥

उन्मदमानससंश्रयणोऽपि कृष्ण तवास्मिनचास्मिपरस्य६
कृष्णपथेतरधर्मरतोऽपि स्वस्थितविस्मृतिसद्धृदयोऽपि
दुर्जनदुर्वचनादरणोऽपि कृष्णतवास्मि न चास्मि परस्य७
वल्लभवंशजनः सबलोऽपि स्वप्रभुपादसरोजफलोऽपि
लौकिकवैदिकधर्मखलोऽपिकृष्णतवास्मिनचास्मिपरस्य।
पञ्चाक्षरमहामन्त्रगर्भितस्तोत्रपाठतः ।
श्रीमदाचार्यदासानां तदीयत्वं भवेद्ध्रुवम् ॥ ९ ॥

इति श्रीहरिदासोदितं पंचाक्षरमंत्रगर्भस्तोत्रम् ।

## ॥ अथ श्रीमद्राधाष्टकम् ॥

निकुञ्जे मञ्जूषाद्विविधमृदुपुष्पैकनिचयैः
समाकीर्णं शान्तं सुमणिमहितं कोकिलायतम् ।

हृदि प्रादुर्भूतोद्भटविरहभावैः सपदि यत्
करे कृत्वा पत्रव्यजनमु विशन्तीं हृदि भजे ॥ १ ॥
विदित्वा गोपीशं श्रमविहितनिद्रं हृदि भिया
रणत्कारैर्भूयान्न खलु गतनिद्रः परमिति ।
द्वितीयेन स्तब्धाचलनचपलं कंकणचयं
वितन्वन्तीं मन्दं व्यजनमथ राधां हृदि भजे ॥२॥
विधायाच्छैः पुष्पैर्विविधरचनां चारुमृदुलां
पदप्रान्तालम्बां स्वकरकमलाभ्यां पुनरसौ ।
स्थितं स्वप्राणानां प्रियतमप्रनन्यं निजपुरो-
ऽवगत्यातन्वन्तीमुरसिवनमालां हृदि भजे ॥ ३ ॥
पुरा रासारम्भे शरदमलरात्रिष्वपि हरि-
प्रभावाद्यल्लीलास्मरणकृतचिन्ताशतयुताम् ।
हृदि प्रादुर्भूतं बहिरपि समुद्वीक्षितुमिव
स्वतो वारंवारं विकासितदृगब्जां हृदि भजे ॥ ४ ॥
विचिन्वन्तीं नाथं निरतिशयलीलाकृतिरतं
प्रपश्यन्तीं चिन्हं चरणयुगसम्भूतमतुलम् ।
प्रकुर्वन्तीं मूर्धन्यहह पदरेणूत्करमपि
प्रियां गोपीशस्य प्रणतनिजनाथां हृदि भजे ॥ ५ ॥
निजप्राणाधीशप्रसभमिलनानन्दविकस-
त्समस्ताङ्गप्रोद्गतपुलकरोमावलिमपि ।

स्फुरत्सीत्कारान्तःस्थितसभयभावैकनयनां
पुनः पश्चात्तप्तामतुलरसपात्रं हृदि भजे ॥ ६ ॥
लसद्गोपीनाथाननकमलसंयोजितमुखां
मुखाम्भोधिप्रादुर्भवदमृतपानैकचतुराम् ।
परीरम्भप्राप्तप्रियतशरीरैक्यरसिकां
तृतीयार्थप्राप्तिप्रकटहरिसिद्धिं हृदि भजे ॥ ७ ॥
न मे वाञ्छ्यो मोक्षः श्रुतिषु चतुरात्मा निगदितो
न शास्त्रीया भक्तिर्न पुनरपि विज्ञानमपि मे ।
कदाचिचन्मां स्वामिन्यहह मयि दासे कृपयतु
स्वतः स्वाचार्याणां चरणशरणे दीनकरुणा ॥ ८ ॥

इति श्रीहरिदासोदितं श्रीमद्राधाष्टकं संपूर्णम् ॥

---

## अथ श्रीयमुनाविज्ञप्तिः ॥

कृष्णां कृष्णसमां कृष्ण रूपां कृष्णरसात्मिकाम् ।
कृष्णलीलामृतजलां कृष्णसम्बन्धकारिणीम् ॥ १ ॥
कृष्णप्रियां कृष्णमुख्यरससङ्गमदायिनीम् ।
कृष्णक्रीडाश्रयां कृष्णपदवीप्रापिकामपि ॥ २ ॥
कृष्णस्थितां कृष्णवासहृदयां कृष्णकामुकाम् ।
कृष्णप्रियाप्रियां कृष्णस्थायिभावसमुद्भवाम् ।
कृष्णैककामिलनस्वामभूतां कृष्णसुखाधिनाम् ।

कृष्णगोपीसहचरीं कृष्णसन्मानवर्धिनीम् ॥ ४ ॥
कृष्णकार्यपरां कृष्णलीलास्थलविशोधिकाम् ।
कृष्णक्रीडाकुंकुमादियुतां कृष्णरसान्तराम् ॥ ५ ॥
कृष्णगोपीपूज्यदेवीं कृष्णव्रतफलप्रदाम् ।
कृष्णलीलार्थमायातां कृष्णनीरधिसङ्गताम् ॥ ६ ॥
कृष्णपादस्पर्शकामां कृष्णमानससंश्रिताम् ।
कृष्णासक्तां कृष्णभक्तकृष्णप्रीतिप्रसाधिनीम् ॥ ७ ॥
कृष्णांघ्रिरेणुबहुलां कृष्णसेवकसन्मुखाम् ।
कृष्णभावाविरोधिस्वदासप्रकृतिनाशिनीम् ॥ ८ ॥
नमामि यमुनां कृष्णतुर्यप्रियतमामहम् ।
निजाचार्यपदाम्भोजदासे भावं प्रयच्छतु ॥ ९ ॥

इति श्रीहरिदासोदिता श्रीयमुनाविज्ञप्तिः समाप्ता ।

## अथ गर्वापहाराष्टकम् ॥

स्थूलं विलोक्य वपुरात्मसुतां समूहं
जायां धनानि कुपथे पतितानि भूयः ।
किं तोषमेषि मनसा सकलं समाप्ते
पुण्ये वृथा तव भविष्यति मूढबुद्धे ॥ १ ॥
ईशं भजान्ध विनियुङ्क्ष्व धनानि तत्र
साधून्समर्च परिपूजय विप्रवृन्दम् ।

दीनान् दयायुतदृशो परिपश्य नित्यं
नेयं दशा तव दशाननतोविशिष्टा ॥ २ ॥

धनानि संगृह्य रसं विगृह्य
निगृह्य लोकं परिगृह्य मोहम् ।
देहं वृथा पुष्टमिमं विधाय
न साधवो मूढ सभाजिताः किम् ॥ ३ ॥

न नम्रता कृष्णजनेऽतिकूर्म-
धने परं नैव दयाऽतिदीने ।
कुटुम्बपोषैकमते सदा ते
विधेहि बुद्ध्यैव विपर्ययमन्त ॥ ४ ॥

नैते हया नैव रथा न चोष्ट्रा
न वारणा नेतरवाहनानि ।
विहाय देहं समये गते ते
परं प्रतापस्य तु साधनानि ॥ ५ ॥

कृष्णस्य मायामवगत्य माया-
समूढतान्तं हृदये विधाय ।
तदर्थमेवाखिललौकिकं ते
विधेहि रे वैदिकमप्यशेषम् ॥ ६ ॥

आयुः प्रयाति न हि याति सुतादिरात्मा-
रामाऽखिला अपि विहाय मृतं व्रजति ।

इत्थं विचिन्त्य विषयेषु विसृज्य शक्तिं
भक्तिं हरेः कुरु परां करुणार्णवस्य ॥ ७ ॥
विधाय महदाश्रयं समवहाय सक्तिं सुते
निधाय चरणाम्बुजं हृदि हरे सुखं सन्विश ।
किमर्थमतिचञ्चलं प्रकुरुषे मनः सम्पदो
विलोक्य न हिताश्चलाःसुखयितुं क्षमा दुर्मद ॥ ८ ॥

इति श्रीहरिदासविरचितं गर्वापहाराष्टकम् ।

---

## अथ श्रीवैश्वानराष्टकम् ।

समुद्भूतो भूमौ भगवदभिधानेन सदयः
समुद्धारं कर्तुं कृपणमनुजानां कलियुगे ।
चकार स्वं मार्गं प्रकटमतुलानन्दजननं
स मे मूर्धन्यास्तां हरिवदनवैश्वानरविभुः ॥ १ ॥
निजानन्दे मग्नः सततमथ लग्नश्च मनसा
हरौ भग्नासक्तिर्जगति जगदुद्धारकरणः ।
कृपापारावारः परहृदयशोकापहरणः
स मे मूर्धन्यास्तां हरिवदनवैश्वानरविभुः ॥ २ ॥
महामायामोहप्रशमनमना दोषनिचया-
प्रतीतः श्रीकृष्णः प्रकटपदविद्वेषसयुजाम् ।
सुखध्वंसं चक्रे निगमवचनैर्मायिकनृणां

स मे मूर्धन्यास्तां हरिवदनवैश्वानरविभुः ॥ ३ ॥

प्रसिद्धैस्तैर्दोषैः सहजकलिदोषादिजनित-
र्यतः स्वीयैर्धर्मैरपि च रहितः सर्वमनुजः ।
कृतः सम्बन्धेन प्रभुचरणसेवादिसहितः
स मे मूर्धन्यास्तां हरिवदनवैश्वानरविभुः ॥ ४ ॥

विभेदं यश्चक्रे हरिभजनपूजादिविधिषु
स्वमार्गीयप्राप्यं फलमपि फलेभ्यः समधिकम् ।
विना वैराग्यादेरपि परममोक्षैकफलदः
स मे मूर्धन्यास्तां हरिवदनवैश्वानरविभुः ॥ ५ ॥

परिक्रान्ता पृथ्वीचरणकमलैस्तीर्थमहिम-
प्रसिद्ध्यर्थं स्वीयस्मरणसमवाप्त्यै निजनृणाम् ।
तथा दैवान् जीवान् जगति च पृथक्कर्तुमखिलान्
स मे मूर्धन्यास्तां हरिवदनवैश्वानरविभुः ॥ ६ ॥

हरिं भावात्मानं तदखिलविहारानपि तथा
समस्तां सामग्रीं मनुजपशुपक्षादिसहिताम् ।
कृपामात्रेणात्र प्रकटयति दृक्पराकरुणः ।
स मे मूर्धन्यास्तां हरिवदनवैश्वानरविभुः ॥ ७ ॥

परेषामासक्तिं सुतधनशरीरादिषु दृढां
द्रुतं भस्मीचक्रे बहुलमपि तूलं ज्वल इव ।
स्वसान्निध्यादेव व्यसनमपि कृष्णेऽपि विदध-

त्स मे मूर्धन्यास्तां हरिवदनवैश्वानरविभुः ॥ ८ ॥
इति श्रीमत्प्रोक्तं हरिचरणदासेन हरिणा-
ऽष्टकं स्वाचार्याणां पठति परमप्रेमसहितः।
जनस्तस्य स्याद्वै हरिवदनवैश्वानरपदे
परो भावस्तूर्णं सकलफलरूपस्तदधिकः ॥ ९ ॥
इति श्रीहरिरायजीविरचितं श्रीवैश्वानराष्टकस्तोत्रं समाप्तम्।

---

## ॥ श्रीबालकृष्णाष्टकम् ॥

यत्कृपादृष्टिसद्वृष्टिसिक्ता भक्ता निरन्तरम्।
भवन्ति सुखिनः स्निग्धास्तं श्रीबालहरिं भजे ॥ १ ॥
प्रतिपक्षक्षयात् क्षोण्यामङ्क्षु जातं महद्यशः।
यत्कृपालेशमात्रेण तं श्रीबालहरिं भजे ॥ २ ॥
स्वीयविश्लेषजक्लेशो नष्टः पुष्टः सुखोदधिः।
यत्कृपालेशमात्रेण तं श्रीबालहरिं भजे ॥ ३ ॥
सुस्थिरं सुदृढं पूर्णं प्रियं प्राप्येत सत्वरम्।
यत्कृपालेशमात्रेण तं श्रीबालहरिं भजे ॥ ४ ॥
सुसम्पदा सत्कलया सद्विद्यावृद्धिगामिनी।
यत्कृपालेशमात्रेण तं श्रीबालहरिं भजे ॥ ५ ॥
अनन्याऽहैतुकी पूर्णा सा भक्तिः सुदृढा भवेत्।
यत्कृपालेशमात्रेण तं श्रीबालहरिं भजे ॥ ६ ॥
इयत्तारहितो नित्य आनन्दः प्राप्यतेऽनिशम्।

यत्कृपालेशमात्रेण तं श्रीबालहरिं भजे ॥ ७ ॥
श्रीवल्लभेशपादाब्जे रतिः स्याद्विमला परा ।
यत्कृपालेशमात्रेण तं श्री बालहरिं भजे ॥ ८ ॥
अष्टकं श्रीबालहरेरिदं मङ्गलकृत्प्रियम् ।
पठेद्वा शृणुयाद्भक्त्या फलं विन्देत्स वांछितम् ॥ ९ ॥

इति श्रीमद्वल्लभाचार्यचरणैकतानश्रीमद्गोकुलोत्सवात्मजश्रीजविनजीविरचितं श्रीबालकृष्णाष्टकं समाप्तम् ।

## ॥ अथ श्रीबालकृष्णशरणाष्टकम् ॥

श्रीमद्यशोदाङ्कविहारदक्षे
तत्स्तन्यसक्ते निजभक्तरक्ते ।
गोवर्धनप्रीतिकरे परेऽस्मिन्
श्रीबालकृष्णे रतिरस्तु नित्यम् ॥ १ ॥
श्रीनन्दराजांगणरत्नरश्मि-
किर्मीरितांगद्युतिरम्यरम्ये
तत्रानिशं क्रीडनतत्परेऽस्मिन्
श्रीबालकृष्णे रतिरस्तु नित्यम् ॥ २ ॥
मुख्यामृतं प्राश्य पदामृतं किं
वाञ्छन्ति निश्चेतुमतीव भक्ताः ।
आस्ये पदाङ्गुष्ठधरे ममास्मिन्

श्रीबालकृष्णे रतिरस्तु नित्यम् ॥ ३ ॥
नानामणिव्रातविभूषणानां
चापल्यतो मञ्जुलसिञ्जितैस्तैः ।
स्थिताञ्जितास्ये कृतमुग्धलास्य-
श्रीबालकृष्णे रतिरस्तु नित्यम् ॥ ४ ॥
घोषेषु गोपंकयुतेषु गत्वा
प्रत्यङ्गमालिन्यविशेषहृद्ये ।
बाल्यात्कलालापमनोहरेऽस्मिन्
श्रीबालकृष्णे रतिरस्तु नित्यम् ॥ ५ ॥
स्निग्धामलाकुञ्चितकुन्तलस्त्र-
ग्वक्त्रेण भृंगावृतपद्मशोभाम् ।
जहँति तस्मिन् मम नन्दसूनौ
श्रीबालकृष्णे रतिरस्तु नित्यम् ॥ ६ ॥
दन्तद्वयेनार्जितकुन्दकोशे
द्वन्द्वोत्थशोभे नवनीरदाभे ।
हैयंगवीनाकलितैकहस्ते
श्रीबालकृष्णे रतिरस्तु नित्यम् ॥ ७ ॥
हस्तेन नेत्रादपसारितेन
स्निग्धाञ्जनेनाक्तकपालदेशे ।
व्रजांगनास्नेहसुधासुपात्रे

श्रीबालकृष्णे रतिरस्तु नित्यम् ॥ ८ ॥
इति श्रीबालकृष्णस्य वर्णनप्रार्थनाष्टकम् ।
वर्णितं जीवनाख्येन गोकुलोत्सवसूनुना ॥

इति श्रीवल्लभचरणैकतानश्रीमद्गोकुलोत्सवतनूद्भवश्रीजीवने-
शविरचितं श्रीबालकृष्णशरणाष्टकं सम्पूर्णम् ।

## अथ गङ्गाद्विपदी ।

जयजय त्वं सदानन्दद जन्हुजे शशिशिखराशिरसि सितकुसुममाले ॥ भक्तजनहृदयालवालगतहरिचरण-सुरतरुपसवभूते रसाले ॥ १ ॥ शिखरितनयानयन-रोलम्बचुम्बिते दूरीकृतदुरितदौर्गन्ध्यजाले । जीवनं भक्तजनजीवनं तव यतस्त्रिविधतापापहं मुक्तिशाले २

इति श्रीगोकुलोत्सवात्मजगोस्वामिश्रीजीवनजी-
महाराजकृता गङ्गाद्विपदी सम्पूर्णा ॥

## अथ यमुनाचतुष्पदी ॥

जयति तरणितनया सदा कृष्णहृदयंगमा सुरासुरमनुजप्रार्थितस्वभूपा ॥ तरललहरीलाभलुलितकलिकलितमतिपातिततति निरयमुद्धरणकामा ॥ १ ॥ कमलनिलयानिलयकमलनयनानयनप्रथुमलयशुचि-

सरणीनीलधामा ॥ सुरऋषभद्दषत्समभुवननवक-ञ्जमकरन्दरसपायिमधुपाभिरामा ॥ २ ॥ कृतसालिलमज्जनमनोहृतभ्रमनिचयभवचलावर्तदामा । तट-निकटविस्फालनाच्छलितविमलजलफेनकुलसिताऽपि द्विधा श्यामा ॥ ३ ॥ कृष्णजीवनवहा त्वमसि प्रतिदिनमतस्त्वपावशवर्तिनी खलु सदामा ॥ मम ममेति विचिंत्य मनसि घनशर्मदा मामवतु भवभयाच्छौरिवामा ॥ ४ ॥

इति श्रीमद्गोकुलोत्सवात्मजजीवनजीविरचिता
श्रीयमुनाचतुष्पदी समाप्ता ॥

## ॥ अथ नैवेद्यसमर्पणप्रार्थना ॥

यशोदायाः स्तन्ये तदनुनवनीते व्रजगवां
विहारे दध्यन्ने व्रजयुवतिदत्ते बहुगुणे ।
तथा मित्रात्प्राप्ते पृथुकवरमुष्टौ मुरहरे
यया प्रीतिस्तां मे प्रकटय सुनैवेद्यनिचये ॥ १ ॥
विदूरस्य गृहे प्रीत्या यथा भुक्तं व्रजेश्वर ।
तथैव भुङ्क्ष्व नैवेद्यं मयि नाथ कृपां कुरु ॥ २ ॥
ब्रह्माद्यैर्यः परित उरुभी रूपवेषैः सुवेषो
लक्ष्म्या [illegible] ः ।

नर्मक्रीडाप्रहसितमुखो भोजयन् भक्तियुक्तान्
भुङ्क्ते पात्रे कनकघटिते षड्रसं श्रीरमेशः ॥ ३ ॥
नायिकाष्टकयुक्तोऽत्र भोजनं कुरु माधव ॥
षड्रसामृतनैवेद्यं स्वर्णपात्रे समर्पितम् ॥ ४ ॥
यथा त्वं गोपिकादीनां निजानन्दं प्रयच्छसि ।
तथैव भुक्तान्नशिष्टं भक्तेभ्यो यच्छ पुष्कलम् ॥ ५ ॥
ब्रह्माद्याः सनकाद्याश्च नारदाद्या महत्तम ।
हरिभुक्तावशिष्टान्नं सर्वे गृह्णन्ति वैष्णवाः ॥ ६ ॥

इति श्रीनैवेद्यसमर्पणप्रार्थना समाप्ता ॥

## अष्टपदी

॥ राग भैरव ॥

जयति निजघोषभुवि गोपमणिभूषणम् ।
युवतिकलधौतरतिजटितमविदूषणम् ॥ध्रुवप० ॥
विकचशरदम्बुरुहरुचिरमुखतोऽनिशम् ॥
जिघ्रतादमलमधुमदशालिनी भृशम् ॥ १ ॥
तरलदलसापांगविभ्रमभ्रामितम् ॥
निःस्थिरीभवितुमिच्छतु हृदितकामितम् ॥ २ ॥
मधुरमृदुहासकलिताधरच्युतरसम् ।
पिबतु रसनाऽपि मुहुरुदितरतिलालसम् ॥ ३ ॥

अमृतमयशिशिरवचनेषु नवसूक्तसुकम् ॥
श्रवणपुटयुगलमनुभवतु चिरसूक्तसुकम् ॥ ४ ॥
विपुलवक्षःस्थले स्पर्शरसपूरितम् ।
तुंगकुचकलशयुगमस्तु मदनेरितम् ॥ ५ ॥
मुदितमकाय देवद्रुमालम्बिता ।
हर्षमतिशायितमुपयातु तनुलता ॥ ६ ॥
पुष्परसपुष्टपरपुष्टभृंगप्रिये ।
वसतिरपि भवतु मम निभृतकुञ्जालये ॥ ७ ॥
गीतमिदमेवमुरुभावगर्भितपदम् ।
रोचयतु कृष्णमिह सरससम्पदम् ॥ ८ ॥

इति श्रीदेवकीनन्दजीकृताऽष्टपदी ।

## श्रीयमुनाष्टकम् ।

या गोकुलागमनसम्भ्रमदत्तमार्गा
कृष्णाय शौरिमुदकैरविभावयन्ती ।
स्प्रष्टुं तदङ्घ्रिकमलेऽभवदुत्तरङ्गा
सा मन्मनोरथशतं यमुना विधत्ताम् ॥ १ ॥
या नन्दसूनुमुरलीलयोद्यदु-
भावप्रभावगलदश्रुपरागमङ्घ्रिम् ।
उन्मीलिताब्जनयनाऽस्पृशदूर्मिदोर्भिः

सा मन्मनोरथशतं० ॥ २ ॥

या गोकुलेशमुषितांशुकलाञ्जतान्त-
राकण्ठमग्ननवनन्दकुमारिकाणाम् ।
कम्पोद्गमं विदधती न विलम्बमैच्छत्
सा मन्मनोरथशतं० ॥ ३ ॥

या राधिकाऽधरपयोधरकामुकाय
तस्मै निकुञ्जनिलयं स्वकरैश्चकार ।
स्वच्छोचितातिमृदुवालुकभूवितानं
सा मन्मनोरथशतं० ॥ ३ ॥

या रासकेलिजनितश्रमहारिवारि-
क्रीडासु घोषवनितोच्छलदम्बुराशिः ।
नन्दात्मजं सुखयतिस्म कृताभिषेकं
सा मन्मनोरथशतं० ॥ ५ ॥

या चञ्चदञ्चलदृशः सभयं व्रजस्त्रीः
पीनोन्नतस्तनतटीः परिरभ्य मन्दम् ।
पारे नयन्तमुपलक्ष्य हरिं समासीत्
सा मन्मनोरथशतं० ॥ ६ ॥

या विभ्रमद्भ्रमरपङ्क्तितदङ्गसङ्ग-
लग्नाङ्गरागरुचिरद्युतिदामनेत्री ।
तत्पादपङ्कजरजोपचिताङ्गदात्री

सा मन्मनोरथशतं० ॥ ८ ॥

या सेविताऽनिशमशेषजनैर्व्रजेश-

पादाम्बुजेऽतिरतिमाशु ददाति तेभ्यः ।

संस्तूयते शिवविरिञ्चिमुनीन्द्रवर्यैः

सा मन्मनोरथशतं० ॥ ८ ॥

उक्तं मयाऽष्टकमिदं तव सूरसूते

यः सादरं त्वयि मनः प्रपठेन्निधाय ।

तस्याचला व्रजपतौ रतिराविरास्तां

नित्यं प्रसीद मयि देवकिनन्दनेऽपि ॥ ९ ॥

इति श्रीदेवकीनंदनकृतौ यमुनाष्टकं सम्पूर्णम् ।

## ॥ श्रीवल्लभाष्टकम् ॥

प्रथयितुमच्युतचरणाम्बुजरसपानैकसंश्रयं वर्त्म ।

श्रीमल्लक्ष्मणतनुजो जगति श्रीवल्लभो जयति ॥ १ ॥

यदनुग्रहेण जन्तून् व्रजमतिरध्यात्मनो मनुते ।

निःसाधनसाध्यो जगति० ॥ २ ॥

विश्वोद्धारविचारप्रकटितकरुणोत्तरङ्गपाथोभिः ।

दिशिदिशि विदितविभूतिर्जगति० ॥ ३ ॥

मायामतादिविपक्षं सर्वं ब्रह्मेति वादवज्रेण ।

चिच्छेद यद्भुजवीर्यो जगति श्री० ॥ ४ ॥

वितरति कृष्णकथामृतधनमविनाश्यं सुदुर्लभं बहुलम् ।
अर्थिषु तदुदितकीर्तिर्जगति० ॥ ५ ॥
कमलाकरयुगलालितविमलाशयसेविनाङ्घ्रियुगः ।
अचलाचलबहुचरितो जगति० ॥ ६ ॥
नाशयति शब्दसृष्टैर्यत्तज्ज्ञानांशुमांस्तमोऽज्ञानम् ।
अघतूलराशिदहनो जगति० ॥ ७ ॥
सहजासुरजतायां दुःखोदर्काय वक्रतर्केण ।
अविदितमार्गादिगर्को जगति श्रीवल्लभो जयति ॥८॥

इति श्रीदेवकीनन्दनजीकृतं श्रीवल्लभाष्टकम् ।

## ॥ अथ नन्दकुमाराष्टकम् ॥

सुंदरगोपालं उरवनमालं नयनविशालं दुःखहरं ।
वृन्दावनचन्द्रमानन्दकन्दं परमानन्दं धरणिधरम् ।
वल्लभघनश्यामं पूर्णकामं अत्यभिरामं प्रीतिकरं ।
भज नन्दकुमारं सर्वसुखसारं तत्वविचारं ब्रह्मपरम् ॥१॥
सुन्दरवारिजवदनं निर्जितमदनं आनन्दसदनं मुकुटधरं
गुञ्जाकृतिहारं विपिनविहारं परमोदारं चीरहरम् ।
वल्लभपटपीतं कृतउपवीतं करनवनीतं विबुधवरं भ० २
शोभितमुखधूलं यमुनाकूलं निपट अतूलं सुखदतरं
मुखमण्डितरेणुं चारितधेनुं वाजितवेणुं मधुरसुरम् ।

वल्लभअतिविमलं शुभपदकमलं नखरुचि अमलं तिमिरहरं भ० ॥ ३ ॥

शिरमुकुटसुदेशं कुञ्चितकेशं नटवरवेषं कामवरं ।
मायाकृतमनुजं हलधर अनुजं प्रतिहतदनुजं भारहरं ।
वल्लभव्रजपालं सुभगसुचालं हितअनुकालं भाववरं भ० ॥ ४ ॥

इन्दीवरभासं प्रकटसरासं कुसुमविकासं वंशिधरं ।
जितमन्मथमानं रूपनिधानं कृतकलगानं चित्तहरं ।
वल्लभमृदुहासं कुंज निवासं विविधविलासं केलिकरं भज० ॥ ५ ॥

अतिपरप्रवीणं पालितदीनं भक्ताधीनं कर्मकरं ।
मोहनमतिधीरं फणिबलवीरं हतपरवीरं तरलतरं
वल्लभव्रजरमणं वारिजवदनं दलधरशमनं शैलधरं भ० ॥ ६ ॥

जलधरद्युति अङ्गलालितत्रिभगं बहुकृतिरङ्गं रसिकवरं गोकुल परिवारं मदनाकारं कुंजविहारं गूढनरं
वल्लभव्रजचन्द्रं सुभगसुछन्दं कृतआनंदं भ्रान्तिहरं भज० ॥ ७ ॥

वंदितयुगचरणं पावनकरणं जगदुद्धरणं विमलधरं
कालियशिरगमनं कृतफणिनमनं घातितयमनं मृदु-

लतरं वल्लभदुःखहरणं निर्मलचरणं अशरणशरणं मुक्तिकरं भज० ॥ ८ ॥

इति श्रीभाषाभाषितं श्रीनन्दकुमाराष्टकं सम्पूर्णम् ॥

## ॥ श्रीगिरिराजधार्यष्टकम् ॥

भक्ताभिलाषाचरितानुसारि
दुग्धादिचार्येण यशोविसारी ।
कुमारतानंदितघोषनारी
मम प्रभुः श्रीगिरिराजधारी ॥ १ ॥

व्रजाङ्गनावृन्दसदाविहारी अङ्गैर्गुहारतमोपहारी
क्रीडारसावेषतमाभिसारी मम० ॥ २ ॥

वेणुस्वनानन्दितपन्नगारी रसातलानृत्यपदप्रचारी
क्रीडन् वयस्याकृतिदैत्यमारी मम० ॥ ३ ॥

पुलिन्ददाराहितशम्बरारी रमासमोदारदप्रकारी ।
गोवर्धने कन्दफलोपहारी मम० ॥ ४ ॥

कलिन्दजाकूलदुकूलहारी कुमारिकाकामकलाविसारी ।
वृन्दावने गोधनवृन्दचारी मम० ॥ ५ ॥

व्रजेन्द्रसर्वाधिकगर्वहारी महेन्द्रगर्वाधिकगर्वहारी ।
वृन्दावने कन्दफलोपहारी मम० ॥ ६ ॥

मनःकलानाथतमोविदारी वंशीरवाकारिततत्कुमारी ।

रासोत्सवोद्वेल्लरसाब्धिसारी मम० ॥ ७ ॥
मत्तद्विपोद्दामगतानुकारी लुण्ठत्प्रसूनाप्रपदीनहारी ।
रामारसस्पर्शकरप्रसारी । मम० ॥ ८ ॥

इति श्रीव वि० श्रीगिरिराजधार्यष्टकम् ।

---

## ॥ अथ श्रीगोपीजनवल्लभाष्टकम् ॥

नवाम्बुदानीकमनोहराय प्रफुल्लराजीवविलोचनाय ।
वेणुस्वनैर्मोदितगोकुलाय नमोऽस्तु गोपीजनवल्लभाय १॥
किरीटकेयूरविभूषिताय ग्रैवेयमालामणिराञ्जिताय ।
स्फुरच्चलत् काञ्चनकुण्डलाय नमो० ॥ २ ॥
दिव्याङ्गनावृन्दनिषेविताय स्मितप्रभाचारुमुखाम्बुजाय
त्रैलोक्यसम्मोहनसुन्दराय न० ॥ ३ ॥
रत्नादिमूलालयसंश्रिताय कल्पद्रुमच्छायसमाश्रिताय ।
हेमस्फुरन्मण्डलमध्यगाय नमो० ॥ ४ ॥
श्रीवत्सरोमावलिरञ्जिताय वक्षःस्थले कौस्तुभभूषिताय ।
सरोजकिञ्जल्कनिभांशुकाय नमो० ॥ ५ ॥
दिव्याङ्गुलियाङ्गुलीलिराञ्जिताय मयूरपिच्छच्छविशोभिताय
वन्यस्रजालङ्कृतविग्रहाय नमो० ॥ ६ ॥
मुनीन्द्रवृन्दैरभिसंस्तुताय क्षरत्पयोगोकुलगोकुलाय ।
धर्मार्थकामामृतसाधकाय नमो० ॥ ७ ॥

एनस्तमःस्तोमदिवाकराय भक्तस्य चिन्तामणिसाधकाय
अशेषदुःखामयभेषजाय नमोऽस्तु गोपीजनवल्लभाय ॥८॥

इति श्रीवह्निसूनुविरचितश्रीगोपीजनवल्लभाष्टकं समाप्तम् ।

---

## ॥ श्रीकृष्णाष्टकम् ॥

श्रीगोपगोकुलविवर्धननन्दसूनो
राधापते व्रजजनार्तिहरावतार ।
मित्रात्मजातटविहारणदीनबन्धो
दामोदराच्युत विभो मम देहि दास्यम् ॥ १ ॥

श्रीराधिकारमण माधव गोकुलेन्द्र-
सूनो यदूत्तम रमार्चितपादपद्म
श्रीश्रीनिवास पुरुषोत्तम विश्वमूर्ते
गोविन्द यादवपते मम० ॥ २ ॥

गोवर्द्धनोद्धरण गोकुलवल्लभाद्य-
वंशोद्भटालय हरेऽखिललोकनाथ ।
श्रीवासुदेव मधुसूदन विश्वनाथ
विश्वेश गोकुलपते मम० ॥ ३ ॥

रासोत्सवप्रियबलानुज सत्वराशे
भक्तानुकम्पितभवार्तिहराधिनाथ ।
विज्ञानधाम गुणधाम किशोरमूर्ते

सर्वेश मङ्गलमतो मम० ॥ ४ ॥
सद्धर्मपाल गरुडासन यादवेन्द्र
ब्रह्मण्य देव यदुनन्दन भक्तिदान ।
संकर्षणप्रिय कृपालय देव विष्णो
सत्यप्रतिज्ञ भगवन् मम० ॥ ५ ॥
गोपीजनप्रियतम क्रिययैकलभ्य
राधावरप्रिय वरेण्य शरण्यनाथ ।
आश्चर्यबाल वरदश्वर पूर्णकाम
विद्वत्तमाश्रयविभो मम० ॥ ६ ॥
कन्दर्पकोटिमदहारण तीर्थकीर्ते
विश्वैकवन्द्य करुणार्णव तीर्थपाद ।
सर्वज्ञ सर्ववरदाश्रयकल्पवृक्ष
नारायणाखिलगुरो मम० ॥ ७ ॥
वृन्दावनेश्वर मुकुन्द मनोज्ञवेष
वंशीविभूषितकराम्बुज पद्मनेत्र ।
विश्वेश केशव व्रजोत्सव भक्तिवश्य
देवेश पाण्डवपते मम० ॥ ८ ॥

श्रीकृष्णस्वतवरत्नमष्टकमिदं सर्वार्थदं शृण्वतां
भक्तानां च प्रियं हरेश्च नितरां यो वै पठेत्पावनम् ।
तस्यासौ व्रजराजसूनुरतुलां भक्तिं स्वपादाम्बुजे

सत्सेव्ये प्रददाति गोकुलपतिः श्रीराधिकावल्लभः॥९॥

इति श्रीव० वि० श्रीकृष्णाष्टकम् समाप्तम् ।

---

## ॥ श्रीगुसांइजीकृतदण्डकः ॥

व्रजराजविराजितघोषवरे

वरणीयमनोहररूपधरे ।

धरणीरमणीरमणैकपरे

परमार्तिहरस्मितविभ्रमके ॥ १ ॥

मकराकृतिकुण्डलशोभिमुखे

मुखरीकृतनुपुरहृद्यगतौ ।

गतिसङ्गतभूतलतापहरे

हरसक्तविमोहनगानपरे ॥ २ ॥

परमप्रियगोपवधूहृदये ।

दयया दिनतापहरे सुहृदाम् ।

हृदयस्थितगोकुलवासजने ।

जनहृद्यविहारपरे सततम् ॥ ३ ॥

सततवेणुनिनादविनोदपरे

परचितहरेस्मितमात्रकथे ।

कथनीयगुणालयपादयुगे

युगले युगले सुदृशां दृशौ ॥ ४ ॥

रतिरस्तु मम व्रजराजसुते ॥ ४ ॥

इति श्रीगुंसाईजीकृतदण्डकः ।

---

॥ अथ श्रीरघुनाथजीकृतगोपालस्तवः ॥

धिक्कुलं धिक्कुटुम्बं च धिग्गृहं धिक्सुतं च धिक् ॥
आत्मानं धिक् शरीरं च श्रीगोपालपराङ्मुखम् ॥१॥
धिक्सम्मतं च पाण्डित्यं महत्वं धिग् यशश्च धिक ।
धिक्कर्म धिक् फलं चैव श्रीगोपालपराङ्मुखम् ॥ २ ॥
धिग्भोगं भोगिवर्गं धिग्धिक्कामं कामिनं च धिक ।
धिग्यज्ञं धिक् कलत्रं च श्रीगोपालपराङ्मुखम् ॥ २ ॥
धिग्धर्मं धिक्सुखं चैव धिक्स्वान्तं धिक्च जीवनम् ।
धिग्वचो धिक् श्रमं चैव श्रीगोपालपराङ्मुखम् ॥४॥
धिङ्मातरं च पितरं धिक् शिष्यं धिग् बलं च धिक् ।
भोक्तारं भरणं धिक्च श्रीगोपालपराङ्मुखम् ॥ ५ ॥
धिक् पालकं च राजानं धिग्दातारं धिगिन्द्रियम् ।
धिक् प्रेम धिग् विलासं च श्रीगोपालपराङ्मुखम् ६॥
धिङ्नाट्यं धिक्तपःपुण्यं धिग्लाभं धिग्व्ययं च धिक् ।
धिक् स्थलं धिग् धनं चैव श्रीगोपालपराङ्मुखम् ॥७॥
धिक्कालं धिक् प्रियं चैव धिग्व्रतं भ्रातरं च धिक् ।
धिक् सत्यं धिक् मनुष्यत्वं श्रीगोपालपराङ्मुखम्॥८॥

यः पठेत् शुद्धधीर्भूत्वा गोपालस्तवमद्भुतम् ।
भक्त्या त्रिचार्यपापो यः स याति ब्रह्मसन्निधिम् ॥९॥

इति श्रीरघुनाथजीकृतो गोपालस्तवः ॥

## अथ सन्नामभूषणस्तोत्रम् ।

गोपालाय धराधरेन्द्रपतये स्त्रीधार्तिहर्त्रे सुर-
त्रासाम्भोधिनिमग्नदेवनिचयोद्धर्त्रे यशोदात्मने ।
श्रीमन्नन्दसुताय गोपवनितासंलालिताय ध्रुवं
कण्ठस्थापितकौस्तुभाय जलदश्यामाय तुभ्यं नमः ॥१॥

यन्नामलवसंस्पर्शान्न तिष्ठति पराश्रयः ।
तं गोपीहृदयानन्ददायकं प्रभुमाश्रये ॥ २ ॥

यन्नामसम्भावनया गजेंद्रो
ग्राहाद्विमुक्तःपरमं पदं च ।
जगाम तन्नामशतं च साष्टकं
वदाम्यहं भक्तियुतो यथामति ॥ ३ ॥

पूर्वं श्रीवासुदेवेन नाम्नामष्टोत्तरं शतम् ।
कृतं यस्य मया तस्य तत्तन्नामानुसारतः ॥ ४ ॥

छन्दोऽनुष्टुबृषिः कर्त्ता देवो गोवर्द्धनाधिपः ।
सर्वेष्टफलसिद्ध्यर्थे विनियोग उदाहृतः ॥ ५ ॥

गोपालः परमानन्दो यशोदानन्दनन्दनः ।

वसुदेवात्मजः श्रीशो वासुदेवः सनातनः ॥ ६ ॥
पीताम्बरो जगन्नाता माधवो भक्तवत्सलः ।
अनन्तकीर्तिर्यज्ञेशः सर्वज्ञः सर्वमङ्गलः ॥ ७ ॥
वनमाली सूर्यकोटिप्रतीकाशो महाबलः ।
विश्वम्भरः कृपासिन्धुः पुरुषः पुरुषोत्तमः ॥ ८ ॥
कौस्तुभोद्भासितोरस्कः कृपालुर्जगतां पतिः ।
मथुरागमनोद्भूतमङ्गलाक्रांतगोकुलः ॥ ९ ॥
कालीयस्य फणोत्पन्नमणिभूषितविग्रहः ।
पद्मनाभः शेषशायी गोगोपगोपिकापतिः ॥ १० ॥
निरञ्जनः प्रतापी च जगदानन्दकारकः ।
नताकृतिर्यदूनां च कुलचूडामणिर्विभुः ॥ ११ ॥
कन्दर्पकोटिलावण्यः परमाद्भुतरूपधृक् ।
कमलाधिपतिः स्वामी सर्वदेवेशनायकः ॥ १२ ॥
चतुर्भुजश्चतुर्मूर्तिश्चतुर्वर्गविशारदः ।
नारायणः सर्वरूपः सर्वदा पूतमानसः ॥ १३ ॥
श्रीकृष्णः केशिसंहर्त्ता मुरारिर्देवकीसुतः ।
सर्वारिष्टान्तकः सर्वपूरकः सर्वभाववित् ॥
खरदुष्टिनिराकर्त्ता तुलसीदासवल्लभः ।
पूरिताखिलभक्तादिहृद्युत्पन्नमनोरथः ॥ १५ ॥
उपेन्द्रः सर्वसाक्षिश्च नरदेवो ह्योकपिः ।

सोमवंशोद्भवो विष्णुः सर्वात्मा सद्गुणार्णवः ॥१६॥
गोपिकाग्रसरुभूतनवनीतलवप्रियः ।
धूलीधूसरिताङ्गश्च कमलारुणलोचनः ॥ १७ ॥
गोवर्द्धनाद्रिधारी च तत्स्थिताखिलरक्षकः ।
प्रमेयोत्पन्नसद्भावसफलीकृतगोपिकः ॥ १८ ॥
तिरस्कृतहरीणाक्षः पूतनाप्राणघातकः ।
देवोऽच्युतो व्रजेशश्च सर्वधर्म्मपरायणः ॥ १० ॥
वृन्दावनप्राणपतिः सत्यवक्ता धुरंधरः ।
कृतरासादिसंनृत्यसादीभूतवपूजनः ॥ २० ॥
नंदापदश्च संहर्त्ता बालगोपालचेष्टितः ।
दामोदरो विश्वमूर्तिर्धेनुकारिप्रलम्बहा ॥ २१ ॥
वातासुरारिर्गोविन्दः कंसघ्नो गोकुलोत्सवः ।
देवेन्द्रदर्पसंहर्त्ता रुक्मिणीप्राणवल्लभः ॥ २२ ॥
समस्तदुष्टहर्ता च मोक्षदो गरुडध्वजः ।
योगीश्वरो जगत्पूज्यो महोदारचरित्रवान् ॥ २३ ॥
उद्वहः श्रीयशोदालालितो मधुसूदनः ।
समुद्रकोटिगम्भीरःसप्तलोकैकमण्डनः ॥ २४ ॥
जगदेकस्फुरत्ख्यातिर्धरासद्घातिनाशनः ।
सत्यभामाप्राणपतिर्यमुनाजलकौतुकी ॥ २५ ॥

सन्नामभूषणाख्यं वै स्तोत्रं यः प्रपठेत्सुधीः ।

कण्ठे लिखित्वा संस्थाप्य सोऽपि विष्णुर्न संशयः॥२६॥
गोकुलेशं नमस्कृत्य स्तुत्या भक्त्या विचारितम्।
तस्माद्गोपालभक्तानामस्तु बुद्धिप्रसारिणम्॥ २७॥
प्रोक्तानि यानि नामानि भूषारूपाणि तानि सः।
दध्यादङ्गेषु सर्वेषु त्रैलोक्यविजयीभवेत्॥ २८॥

इति सन्नामभूषणं स्तोत्रं॥

---

## अथ बालमुकुन्दस्तोत्रम्।

करारविन्देन पदारविन्दम्
मुखारविन्दे विनिवेशयन्तम्।
वटस्य पत्रस्य पुटे शयानम्
बालं मुकुन्दं मनसा स्मरामि॥ १॥
वटस्य पत्रे शयनं मुरारे-
र्वस्त्रं कषायं परिधानकाले।
कल्पान्तकाले शिशुरूपरूपम्
बालं मु०॥ २॥
सर्वाङ्गकृष्णे कलये विचित्र-
मुग्रं त्रिरेखाकरणेषु रम्यम्।
सिन्दूरवर्णं दशि कं च सिंहं
बालं मु०॥ ३॥

अर्धं शरीरं नररूपदृष्टम्
अर्धं च सिंहं वदनं करालम्।
दैत्यस्य पक्षं हि विदारयन्तम्
बालं मु० ॥ ४ ॥
गोवर्धनोद्धारविशालबालम्
गोगोपगोपीजनमध्यसंस्थम्।
गोपांश्च मध्ये परिवेष्टयन्तम्
बालं मु० ॥ ५ ॥
श्यामं शरीरं जलदैः सवर्णम्
मयूरपिच्छैः शिरशोभयंतं।
वाद्यन्तवेणुं वदने सलीलम्
बालं मु० ॥ ६ ॥
ब्रह्मात्मबालं भुवनैकपालम्
यशोविशालं शिशुपालकालम्।
संसारमायामतिमोहजालम्
बालं मु० ॥ ७ ॥
लीलाकराग्रे धृतपर्वतेन्द्रम्
इन्द्रं महावृष्टिमदं जयन्तम्।
गोपीभुजैर्लालितपादपद्मम्
बालं मु० ॥ ८ ॥

मुकुन्दाष्टकमिदं पुण्यं
त्रिसन्ध्ये च शुचिः पठेत् ।
स एव लभते मोक्षं
दारिद्र्यं चैव नश्यति ॥ ९ ॥

इति श्रीभाषामिश्रितबालमुकुन्दस्तोत्रं सम्पूर्णम् ।

अथ विट्ठलविरचिताऽऽरार्तिका ।

शरणागतभीतिनिवृत्तिपरम्
परपक्षतमोनिकरांशुनिधिम् ।
निधिसेवितपादसरोजयुगम्
युगधर्मनिवर्त्तककालफलम् ॥ १ ॥

करजोल्लिखितप्रमदोच्चकुचम्
कुचकुंकुमलिप्तयशोहृदयम् ।
हृदयस्थितगोकुलवासिजनम्
जनसञ्चितपुण्यचयैकफलम् ॥ २ ॥

फलदानपरातिसमर्थभुजम्
भुजदण्डगृहीतकुचाग्रमणिम् ।
मणिशोभिहस्तधृताद्रिवरम्
वरगोपवधूचयसंवलितम् ॥ ३ ॥

वलितप्रमदामुतरासकरम्

करपद्मयुगाहितवेणुवरम् ।
वरभक्तशिरःस्थितपद्मकरम्
करमर्दितयादवयूथरिपुम् ॥ ४ ॥
रिपुयूथभुजङ्गमदर्पहरम्
हरपूजितरम्यसरोजपदम् ।
पदपद्मयुगार्चनदत्तपदम्
पदपद्मनखस्थितभक्तिरसम् ॥ ५ ॥
रसपूरितगोपवधूशरणम्
शरणागतघोषजनाभयदम् ।
भयदोघशिरोहरखड्गधरम्
धरणीकृतपुण्यचयैकफलम् ॥ ६ ॥
फलहेतुविमर्दितदुष्टखरम्
खरमुक्तिदपादसरोजवरम् ।
वरबर्हिशिखण्डकयुक्तकचम्
कचपाशनिवेशितपुष्पचयम् ॥ ७ ॥
घोषाधिपति कमलाधिपति ।
वन्दे तमहं मथुराधीशम् ॥ ८ ॥

इति श्रीविठलेशविरचिताऽऽरार्चिका समाप्ता ।

## अथ श्रीमदाचार्यचरणानां सकलावतारसाम्यरूपं निरूप्यते ।

( श्रीहरिरायचरणाः )

यथा श्रीमद्वराहेण दंष्ट्रया चोद्धृता मही ।
हिरण्याक्षश्च निहतो गोद्विजामरदुःखदः ॥ १ ॥
तथा श्रीवागधीशेन नष्टा भक्तिः समुद्धृता ।
निहत्य भक्तद्वेष्टारं दुष्टसंघं भयप्रदम् ॥ २ ॥
यतोऽयं वल्लभाधीशो विख्यातः पृथिवीतले ।
'रोषदृक्पातसंप्लुष्टभक्तद्विडि'ति नामतः ॥ ३ ॥

इति वाराहसाम्यम् ॥ १ ॥

सनन्दनादयो देवा ब्रह्मचर्यप्रकाशकाः ।
बभूवुर्ब्रह्मणः पुत्राः शुद्धमार्गप्रवर्त्तकाः ॥ ४ ॥
तथायमपि वागीशो ह्यन्यस्त्रीसंगमत्यजत ।
अत एवास्य नामास्ति "सुपूरितः" "रहःप्रियः" ५॥
"पतिव्रतापतिश्चेति" तेन तद्वद्बभूव सः ।
ब्रह्मचर्यत्वसंसिद्धिस्तेन जाता महाप्रभोः ॥ ६ ॥

इति सनकादिसाम्यम् ॥ २ ॥

यथा श्रीनारदः पंचरात्रं व्यरचयत्प्रभुः ।
यस्मिन्सेवाप्रकारश्च स्फुटं श्रीमानकल्पयत् ॥ ७ ॥
"भक्त्याचारोपदेष्टा" भूतकर्ममार्गप्रवर्त्तकः ॥ ८ ॥

येनाचारश्च यज्ञश्च पुष्टिमार्गः प्रवर्त्तितः ।
ततोयं "यज्ञकर्त्ता" च "यज्ञभोक्ते"ति विश्रुतः ॥ ९ ॥

इति नारदसाम्यम् ॥ ३ ॥

यथा नारायणो देवो गन्धमादनवासभाक् ।
कामसेनां विजित्याशु तिष्ठत्येकान्त ईश्वरः ॥१०॥
तथायमपि दुष्टौघं विजित्य करुणानिधिः ।
कृष्णप्रिये व्रजेवासीद्यतोऽयं "श्रीव्रजप्रियः" ॥ ११ ॥

इति नारायणसाम्यम् ॥ ४ ॥

यथा श्रीकपिलः सांख्यमुक्त्वाऽज्ञानमुपाहरत् ।
जीवानां दुष्टमनसां देवहूतीप्रियावहः ॥ १२ ॥
तथाणुभाष्यव्याख्यानादयमप्यखिलेश्वरः ।
विनाश्याज्ञानपटलं चरतां निजवर्त्मनि ॥ १३ ॥
बभौ सर्वत्र विजयी श्रीइलम्माप्रियावहः ।
अत एवास्य नामोक्तं 'सूत्रभाष्यप्रवर्त्तकः' ॥ १४ ॥

इति कपिलसाम्यम् ॥ ५ ॥

आन्वीक्षिकी यथा दत्तः प्रह्लादादिभ्य उक्तवान् ।
नानावाक्यप्रचारेण दृढीकृत्य सतां मतम् ॥ १५ ॥
तथायमपि 'वागीशः' समाश्रित्य सतां मतम् ।
'भक्त्याचारोपदेशार्थं' 'नानावाक्यनिरूपकः' ॥ १६ ॥
तदर्थमेव भगवान् कथयामास वै बहून् ।

स्तवान् कृष्णाश्रयाद्यांश्च प्रभुः "श्रीकृष्णहार्दवित्" १७।

इति दत्तसाम्यम् ॥ ६ ॥

यथा यज्ञावतारश्च यामादिद्वादशात्मजैः ।
सार्द्धं गुणगणाब्धिश्चामक्षत्स्वायंभुवान्तरम् ॥ १८ ॥
तथा श्रीवल्लभाधीशः कुमाराभ्यां च नप्तृभिः ।
दूरीकृत्यासुरान् सर्वानपात्सारस्वतान्तरम् ॥ १९ ॥

इति यज्ञावतारसाम्यम् ॥ ७ ॥

यथा श्रीऋषभो देवः पुत्राणां ज्ञानदोऽभवत् ।
अज्ञानान्तर्द्धिरमलः पुंसां मोहाब्धिमज्जताम् ॥२०॥
तथायं चाज्ञातलीलो नाम्ना ख्यातश्च भूतले ।
स्ववंशे स्थापिताशेषस्वमाहात्म्यश्च सोऽभवत् ॥२१॥

इति ऋषभदेवसाम्यम् ॥ ८ ॥

यथा श्रीपृथुराजा च गोरूपोर्वीं दुदोह वै ।
सर्वजीवार्थमनघो महाराजोपसेवितः ॥ २२ ॥
तथा महेन्दिरास्वामी सामवेदसमुद्भवाः ।
ऋग्धेनूः संदुदोहाय 'भक्तेच्छापूरका'ह्वयः ॥ २३ ॥
पुष्टिमार्गप्रचारार्थं शुद्धाद्वैतमताप्तये ।
"लीलामृतरसौघार्द्रीकृताखिलशरीरभृत्" ॥ २४ ॥

इति पृथुसाम्यम् ॥ ९ ॥

भक्तं यथैकं मत्स्यस्तु सत्यव्रतमपात्प्रभुः ।

जलात्प्रलयकालीनाव मात्स्यं संश्रावयज्जनान् ॥२६॥
तथा श्रीवल्लभेशस्तु संसारभयवारिधेः ।
भक्तानपात् बहून् श्रीशः श्रावयित्वा सुबोधिनीम् ॥

सुरासुराणामुदधिं मथ्नतामप्तं यदा ।

इति मत्स्यसाम्यम् ॥ १० ॥

भूतोऽप्राप्तामृतानां च क्लिश्यतां तेन कर्मणा ॥ २७ ॥
तदा श्रीकमठः साक्षाद्दध्रे मंदरपर्वतम् ।
पृष्ठे च हाटकमयं लक्षयोजनविस्तृते ॥ २८ ॥
तथैव दैवजीवानामासुराणां च वाक्पतिः ।
क्लिश्यतां भवासिन्धौ च मोक्षपीयूषहेतवे ॥ २९ ॥
गृहीत्वा ज्ञानसर्पस्य मुखपुच्छौ महाप्रभुः ।
तदा प्रलुप्तं निगमपर्वतं चोद्दधार ह ॥ ३० ॥
दुष्टोत्थापितपाखण्डविषं भूरि पराक्रमम् ः
पत्रावलंबनशिवरूपेणाथ पपौ मुदा ॥ ३१ ॥

इति कमठसाम्यम् ॥ ११ ॥

यथा धन्वंतरिः पुंसां स्मृतिमात्रार्त्तिनाशनः ।
तथा सतामयमपि 'स्मृतिमात्रार्त्तिनाशकः' ॥ ३२ ॥

इति धन्तन्तरिसाम्यम् ॥ १२ ॥

यथा श्रीमोहिनी दैत्यान् मोहयित्वाथ चाक्षुषैः ।

दैत्योत्संगगतं पात्रं सुधायाः प्राप्य निर्मलम् ॥३३॥

सुरेभ्यश्चामृतं भूयो ददौ दैत्येभ्य एव न।
पुरुषोऽपि महाविष्णुर्धृत्वा स्त्रीरूपमद्भुतम् ॥ ३४ ॥
एवं श्रीवल्लभोपीशो नष्टं वेदमनुत्तमम्।
उद्धृत्य जगतां नाथो निजभार्थमादरात् ॥ ३५ ॥
विरुद्धाश्रयतो दुष्टान्मोहयित्वा महाप्रभुः।
तेन संमथ्य निगमगिरिणास्मिन्भवे शुभम् ॥ ३६ ॥
पुष्टिरूपामृतमथं निष्कास्य गुणवारिधिः।
देवेभ्योऽदादासुरेभ्यो न ददौ भक्तवत्सलः ॥३७॥
पूर्वमासीत्स्वयमपि वल्लभोथ द्वितीयके।
अवतारे संबभूव वाक्पतिः पुरुषाकृतिः ॥ ३८ ॥

अथ सकलजगदार्त्तितटिनीपतिनिवारको भगवान्नरसिंहो यथा स्तंभादाविर्भूय हिरण्यकशिपुं कराग्रेण विदार्य निजभक्तं प्रह्लादं ररक्षैवं भगवान् श्रीवल्लभाधीशोपि चंपकारण्ये वीतिहोत्रात्प्रकटीभूयाखिलदुःखदातारं जीवाज्ञानरूपमहादैत्यं सद्वाक्यप्रचारनखैर्भित्वा प्रह्लादरूपवैष्णववृन्दमरक्षदित्यत एव उग्रप्रताप इति नामनिर्देश इति ॥ ३९

इति नृसिंहसाम्यम् ॥ १४ ॥

अथ च यथाखिलगीर्वाणकदम्बसमीडितगरिष्ठगुणगणपटलो भगवान् वामनः कश्यपसुतं आदा मभि-

क्षुरूपं गृहीत्वा बलेः सर्वस्वमाच्छिद्य ववृधे पुनश्च तेन संपूजितस्तमनुगृह्यान्तर्दधे, तथैव भगवान् इलापतिः श्री.लक्ष्मणराजकुमारः शुद्ध भिक्षुकवद्रूपं समाश्रित्य तत्र च महदभिमानिनं पण्डितसमूहं विजित्याचार्यपदवीं च प्राप्य विद्यानगराधीश्वरमनुगृह्य तेषां निरुत्तराणां जयेन पुष्टिमार्गमार्त्तण्डोदयं कृत्वा मातुलाभिमानं चाहत्य कनकाभिषेकाप्तयशःप्रसारेण वृद्धिं प्राप्य पृथिवीं पर्यक्रामदिति ॥ ४० ॥

इति वामनसाम्यम् ॥ १५ ॥

यथा द्विजद्रोहकरान् जघान क्षत्रियान्बहून् ।
परश्वधेन तीक्ष्णेन रेणुकानन्दवर्धनः ॥ ४१ ॥
तथा श्रीतद्रोहवरान् यः स्मार्तान्नासुरान् प्रभुः ।
पत्रावलंबनखण्डेन जित्वा चक्रे निरुत्तरान् ॥ ४२ ॥

इति परशुरामसाम्यम् ॥ १६ ॥

कलिकालमलग्रस्तान् जीवानालोक्य दुर्मतीन् ।
मन्दभाग्यान् तथा दुष्टान् श्रीमान सत्यवतीसुतः ४३
श्रीमद्भगवतालापात् उद्दधार दयापरः ।
पाषण्डतिमिराक्रान्तजीवजालाद्विधाकरोत् ॥ ४४ ॥
तथा महाप्रभुरपि दुष्टाध्वार्णवमज्जितान् ।
जीवानालोक्य भगवान्पुष्टिमार्गोपदेशतः ॥ ४५ ॥

अङ्गीकृत्य मंत्रादानात् चक्रे भयविवर्जितान्।
पुत्रपौत्रप्रपौत्राद्यैः करोति च करिष्यति ॥ ४६ ॥

इति वेदव्याससाम्यम् ॥ १७ ॥

अयोध्याधिपती रामः सेतुं कृत्वा यथार्णवे।
स्वसेनां स्थापयामास जिग्येऽसुरचमूद्धतम् ॥ ४७ ॥
तथेलम्माकुमारोपि श्रीमद्भागवतार्णवे।
सेतुं सुबोधिनीरूपं विधातथातारयज्जनान् ॥ ४८ ॥
जिगायासुरवर्गं च वैष्णवद्वेषकारकम्।
'श्रीभागवतपीयूषसमुद्रमथनक्षमः' ॥ ४९ ॥

इति दाशरथिरामसाम्यम् ॥ १८ ॥

अथ यथा सकलजगदभीष्टसंपादकः श्रीभगवान् श्रीनन्दराजकुमारो निजसहोदरेण श्रीरेवतीरमणेन पूर्णरेवतीरमणसदृशेन सारस्वतकल्पेऽवतीर्य दुष्टकद-म्बरूपं भूभारमुज्जहार, स्वहस्तमारणेन च तन्मोक्षं चकारैवमसावपि भगवान् पुरुषोत्तमो नारायणादिदी-क्षितानां सोमयागफलस्वरूपः श्रीलक्ष्मणांगजः कला-ववतीर्य पुत्राभ्यां श्रीगोपीनाथविठ्ठलाभ्यां सहाष्टाक्षर-दानेन निगददानेन च केनचिदपराधविशेषेण विनष्ट-मतीन् अत एव गोलोकच्युतान् जीवानुद्दधारेति॥५०॥

इति श्रीकृष्णसाम्यम् ॥ १९ ॥

यथा हलधरः श्रीमान् निजानन्दाब्धिमज्जितः ।
कृष्णसौख्यप्रयत्नात्मा रोहिण्यानंदवर्धनः ॥ ५२ ॥

किञ्च—

निजभाण्डकारकाणामभीष्टदाताथ रेवतीश्रेष्ठः ।
श्रीपुष्टिमार्गसंस्थैः सद्भिः सेव्यो व्रजेशवन्नित्यम्॥५२॥
तथायमपि वागीशो नामभिस्तत्सद्रक्षकैः ।
विख्यातस्त्रिषु लोकेषु कृष्णानुग्रहभाजनः ॥ ५३ ॥
'आनंदः' 'परमानंदः' 'पूर्णानन्दो' जगद्गुरुः ।
'स्वानन्दतुन्दिल'श्चेति इलम्मानंदवर्धनः ॥ ५४ ॥
'अदेयदानदक्ष'श्च श्रीअक्काप्राणवल्लभः ।
'भक्तेच्छापूरकः' 'कृष्णभक्तिकृन्निखिलेष्टदः' ॥ ५५ ॥

इति हलधरसाम्यम् ॥ २० ॥

अथ च यथा भगवान् बुद्धो देवकार्यार्थं सर्वान्विनिन्द्य विश्ववैपरीत्यं कर्माचरन् सर्वान् दैत्यान् मोहयामास, तथायमपि भगवान् श्रीकृष्णास्यः 'प्राकृतानुकृतिव्याजमोहितासुरमानुषः,' इति नामानुकरणसम्पन्नो वैष्णवानां वैपरीत्यं कर्म प्रकाशयन् 'निगूढहृदयत्वं' च दर्शयन् संन्यासधारणमङ्गीकृत्यासुरक्यमोहलीलामाचचरारेति ॥ ५६ ॥

इति बुद्धसाम्यम् ॥ २१ ॥

हयग्रीवो यथा नष्टवेदाविर्भावकारकः ।
तथायमपि वेदोक्तं नष्टमार्गमदर्शयत् ॥ ५७ ॥

इति हयग्रीवसाम्यम् ॥ २२ ॥

हंसो यथा च महतां पुत्राणां ब्रह्मणः पुरा ।
ज्ञानदः समभूवेह ब्रह्मानुग्रहकारकः ॥ ५८ ॥
तथा महाप्रभुरपि महतां ज्ञानदोऽभवत् ।
हनुमत्सदृशानां च रामसन्तोषकारकः ॥ ५९ ॥

इति हंससाम्यम् ॥ २३ ॥

कल्किर्यथा कलेरन्ते जीवाज्ञानं विनाशयन् ।
भद्रमदश्च जीवानां समभविष्यति सर्वतः ॥ ६० ॥
एवं वैश्वानरोपीशः कलिनष्टं च दुर्बलम् ।
पुष्टिमार्गं पुनः श्रीमान् द्योतयिष्यति निर्मलम् ॥ ६१ ॥
पुष्टिमार्गं तु भगवान् सर्वकाले तु रक्षति ।
पुत्रपौत्रादिरूपैश्च 'कुलंभाङ्घ्रिसरोरुहः' ॥ ६२ ॥
भूतेषु च भविष्येषु वर्तमानेष्वपीश्वरः ।
चतुर्युगेषु कृतभुक् मार्गं रक्षति रक्षति ॥ ६३ ॥

इति कल्किसाम्यम् ॥ २४ ॥

एवं सर्वावताराणां गुणकर्मपराक्रमान् ।
दधाति नितरां सन्तः श्रीमान् लक्ष्मणनन्दनः ॥ ६४ ॥
तस्मात्सर्वैर्वैष्णवैश्च त्रैलोक्ये [illegible] ।

प्रकीर्तितः कृष्णरूपः श्रीपूर्णपुरुषोत्तमः ॥ ६५ ॥
अतः स एव संसेव्यो वैष्णवैः पापभीरुभिः ।
ध्यातव्यः स्मरणीयश्च तैलंगतिलकः प्रभुः ॥ ६६ ॥

आर्या—

अस्य श्रवणात्पाठात्प्रभवेत्पुंसामभेदत्वम् ।
श्रीमन्नन्दकुमारवाक्पत्योश्चापि नूनमूर्व्यां वै ॥६७॥
एतन्मदुदितं बालस्वभावाद्दंशवत्सलः ।
श्रीवल्लभाचार्यनामा प्रभुः क्षाम्यतु सर्वथा ॥ ६८ ॥
स्वकीयं श्रीवल्लभीयं मामानन्दनिधिर्हरिः ।
निःसाधनं च वृणुते स कृष्णः शरणं मम ॥ ६९ ॥

इति श्रीहरिदासविरचितं श्रीमहाप्रभुसर्वाव-
तारसाम्यनिरूपणं सम्पूर्णम् ॥

## श्रीयमुनाजीकोस्वरूप ।

श्रीयमुनाजी तिहारो दरस मोहे भावै ।
श्रीगोकुलके निकट बसत है लहरनकी छवि आवै॥
दुख हरनि सुखदेनी यमुनाजी जो जन प्रात उठि नहावै।
मोदनमोहन जुकी प्राणप्यारी पटरानी जु कहावै ॥
श्रीवृन्दावन में रास रच्यो है मोहन मुरली बजावै ।

सूरदास प्रभु तिहारे मिलनकूं वेद विमल यश गावै ॥

## वल्लभकुल ।

जय जय जय श्रीवल्लभ प्रभु श्रीविठ्ठलेश साथे
निज जन पर करत कृपा धरत हात माथे।
दोष सब दूर करत भक्ति भाव हियमें धरत-
गावत सदागुण गाथे ॥
काहेके देह दमत मूरख जन साधन करि विद्यमान-
आनन्द त्याजि चलत क्यों कुपाथे ।
रसिक चरन शरण सदा रहत बडभागी जन आपुनो
करि गोकुलपति धरत ताहि माथे ॥

## श्रीयमुनाजीकेपद ।

पिय संग रंग भर कर कलोलें ॥ सबनकुं सुखदेन पिय संग करत सेन चितमें जब परत चेन तबहीं बोलें ॥ १ ॥ अतिही विख्यात सब बात इनके हाथ नाम लेत कृपा कर अतोलें ॥ दरस कर परस कर ध्यान हिये में धर सदा व्रजनाथ इनसंग डोले ॥ २ ॥ अतिहि सुखकरन दुखसबनके हरन एही लीनो परमानंद झकोलें ॥ ऐसो श्रीयमुने जान तुम करो गुण गान रसिक प्रीतम पावे नग अमोले ॥ ३ ॥ १ ॥ स्याम सुखधाम जहां नाम इनके ॥ निश दिन प्राणपति आय हिय में बसे जोई गावे

सुयश भाग्य तिनके ॥ १ ॥ येही जगमें सार कहत वारंवार सबनके आधार धन गिरधनके ॥ लेत यमुने नाम देत अभयपद धाम रसिक प्रीतम पिया वशजु इतके ॥ २ ॥ २ ॥ कहते श्रुतिसार निरधार करकें ॥ इनबिन कोन ऐसी करे हे सखी हरत दुख द्वंद सुख कदंबराखें ॥ १ ॥ ब्रह्मसम्बन्ध जब होत यह जीव कों तबही इनकी भुजा वाम फरकें ॥ दोरकर सोर कर जाय पिय सो कहे अतिही आनन्द मनमें जो हरखें ॥ २ ॥ नाम निरमोल नग नहीं कोऊ लेसके भक्त राखत हिये हार करकें ॥ रसिक प्रीतमजूकी होत जापर कृपा सोई श्रीयमुनाजूको रूप परखें ॥ ३ ॥ ३ ॥ नयन भर देख अब भानु तनया ॥ केलि पियसों करे भ्रमर तबही परें श्रम जलन भरत आनन्द मनया ॥ १ ॥ चलत टेढी होहि लेत पिय कों मोहि इनबिना रहत नहीं एक छिनया ॥ रसिक प्रीतम रास करत श्रीयमुना पास मानो निरधनकी हैजु धनया ॥ २ ॥ ४ ॥ श्याम सङ्ग श्यामह्वै रही श्रीयमुने ॥ सुरत श्रम बिन्दुतें सिन्धुसी बहिचली मानो आतुर अली रही न भवने ॥ १ ॥ कोटिकाम वारों रूप नयन न निहारों लाल गिरिधर न संग

करत रमने ॥ हरख गोविन्दप्रभु निरख इनकी ओर मानो नव दुलहनी आई गवने ॥ २ ॥ ५ ॥ श्रीयमुनासी नाहिं कोऊ और दाता ॥ जो इनकी शरण जातहैं दोरकें ताहिको तेहि क्षण कर सनाथा ॥ १ ॥ एही गुणगान रस खान रसना एक सहस्र रसना क्यों नदई विधाता ॥ गोविन्दबल तन मन धन वारने सबहिनकी जीवन इनहिंकेजु हाथा ॥ २ ॥ ६ ॥ श्रीयमुनायश जगतमें जोई गावें ॥ ताके आधीन ह्वै रहतहैं प्राणपति नयन अरु वेनमें रस जुछावें ॥ १ ॥ वेद पुराणतें बात यह अगम हैं प्रेमको भेद कोऊ न पावें ॥ कहत गोविन्द श्रीयमुनेकी जापर कृपा सोई श्रीवल्लभकुल शरण आवें ॥ २ ॥ ७ ॥ चरण पंकज रेणु यमुने जु देनी ॥ कलियुग जीव उद्धारन कारण काटत पाप अब धार पेनी ॥ १ ॥ प्राणपति प्राणसुत आय भक्तन हित सकल सुखनकी है जु श्रेणी ॥ गोविन्द प्रभुबिना रहत नहीं एकछिन अतिही आतुर चञ्चलजु नेनी ॥ २ ॥ ८ ॥ धायके जाय जो श्रीयमुना तीरे ॥ ताकी महिमा अब कहां लग बरनिये जाय परसत अङ्ग प्रेम नीरे ॥ १ ॥ निश

दिना कोलि करत मनमोहन प्रियासङ्ग भक्तनकी हैजु भीरे ॥ छीतस्वामी गिरिधरन श्रीविठ्ठल इन बिना नेक नहि धरत धीरें ॥ २ ॥ ९ ॥ जामुखतें श्रीयमुने नाम आवे ॥ जाकूं ऊपर कृपा करत श्रीवल्लभप्रभु सोई श्रीयमुनाजी को भेद पावे ॥ १ ॥ तन मन धन सब लाल गिरिधरनकुं देके चरण जब चित्तलावे ॥ छीतस्वामी गिरिधरन श्रीविठ्ठल नयनन प्रगट लीला दिखावे ॥ २ ॥ १० ॥ धन्य श्रीयमुने निधि देन हारी ॥ करत गुण गान अज्ञान अघ दूर कर जाय मिलवत पिय प्राण प्यारी ॥ १ ॥ जिन कोऊ सन्देह करो बात चित्तमें धरो पुष्टिपथ अनुसरो सुख जो कारी ॥ प्रेमके पुंजमें रासरस-कुञ्जमें नाही राखत रस रंग भारी ॥ २ ॥ यमुने अरु प्राणपति प्राण अरु प्राणसुत चहूं जने जीवपर दया विचारी ॥ छीतस्वामी गिरिधन श्रीविठ्ठल प्रतिके लिये अब संग पधारी ॥ ३ ॥ ११ ॥ गुण अपार एकमुख कहालों कहिये ॥ तजो साधन भजो नाम श्रीयमुनाजीको लाल गिरिधरवर तबही पैये ॥ १ ॥ परम पुनीत प्रीति रीत सब जानकें दृढ कर चरणपै चित्त लय ॥ छीतस्वामी गिरिधरन

श्री विट्ठल ऐसी निधि छांड अब कहांजु जैये ॥२॥
॥ १२ ॥ चित्तमें श्रीयमुना निशदिन जो राखो ॥
भक्तके वश कृपा करतहैं सर्वदा ऐसो श्री यमुनाजी-
को है जू साखो ॥ १ ॥ जो मुखतें श्री यमुने यह
नाम उच्चरें संग कीजे अब जाय ताको ॥ चतुर्भुजदा-
स अब कहतहैं सबनसों ताते श्री यमुने यमुने जू
भाखो ॥ २ ॥ १३ ॥ प्राणपति विहरत श्री यमुना
कूले ॥ लुब्ध मकरंदके भ्रमर जो वस भये रवि
उदय देख मानो कमल फूले ॥ १ ॥ करत गुंजार
मुरलीजु ले सांवरो सुनत व्रजवधू तनसुधजुभूले ॥
चतुर्भुजदास श्रीयमुना प्रेम सिंधुमें लाल गिरिधरन-
वर हरख झूले ॥ २ ॥ १४ ॥ बारबार श्रीयमुने
गुणगान कीजे ॥ एही रसनातें जो नाम रस अमृत
भाग्य जाके सोई जु पीजे ॥ १ ॥ भानु तनया दया
अतिही करुणा मया इनकी कर आस सदाजुजी-
जे ॥ चतुर्भुजदास कहें सोई पिय पास रहे जोई
श्रीयमुनाजीके रसमें भीजे ॥ २ ॥ १५ ॥ हेत कर
देत श्री यमुने वास कुंजें ॥ जहां निशवासर रासमें
रसिकवर कहांलो बरनिये प्रेमपुंजे ॥ १ ॥ थकित
सरिता नीर थकित व्रज वधू भीर कौऊन धरत

धीर मुरली सुनीजे ॥ चतुर्भुजदास यमुने पंकज जान मधुप कीन्यांई चितलाय गुंज ॥ २ ॥ १६ ॥ भक्तपर करें कृपा श्री यमुनेजु ऐसी ॥ छांड निज-धाम विश्राम भूतल कियो प्रकट लीला दिखाईजु तैसी ॥ १ ॥ परम परमारथ करत हैं सबनकोंदेत अद्भुत रूप आप जैसी ॥ नंददास यों जान दृढ कर चरण गहि एक रसना कहा कहा विशेषी ॥ २ ॥ ॥ १७ ॥ नेह कारण श्रीयमुने प्रथमआई ॥ भक्तके चित्तकी वृत्ति सब जानके तहां तें अति आतुर जो धाई ॥ १ ॥ जाके मन जैसी इच्छा हती ताकी तैसी साध जो पुजाई ॥ नंददासप्रभु तापर रीझरहे जोई श्री यमुनाजीको यश जु गाई ॥ २ ॥ १८ ॥ जाते श्री यमुने यमुने जु गावो ॥ शेष सहस्रमुख निश-दिन गावत पार न पावत ताही पावो ॥१॥ सकल सुख देनहार तातें करो उच्चार कहतहू बारंबार जिन भुलावो ॥ नंददासकी आस श्रीयमुने पूरण करी तातें घरी घरी चित्त जु लावो ॥ २ ॥ १९ ॥ भाग्य सौभाग्य श्रीयमुने जु दई ॥ बात लौकिक त्यजो पुष्टि यमुने भजो लाल गिरिधरन वर ताय मिलेई ॥ १ ॥ भजो लाल गिरिधर, बात इनकी लहे

सदा सांनिध्य रहे केलि मेई ॥ नंददास जापर कृपा श्रीवल्लभ करेताके सदा श्री यमुने वस जु हेई ॥ २ ॥ २० ॥ नाम महिमा ऐसी जु जानो ॥ मर्यादादिक कहे लौकिक सुख लहे पुष्टिकों पुष्टि पथ एही जु मानो ॥ १ ॥ स्वाति जलबूंद जब परत हे जाइमें ताहीमें होत तैसो जु वानो ॥ श्रीयमुने कृपासिंधु जान रसवहुमान सूर गुण पूर कहांलो वखानो ॥ २ ॥ २१ ॥ भक्तको सुगम श्रीयमुने अगम औरें ॥ प्रातही न्हात अघजात ताके सकल यमहूं रहत ताहि हाथजोरें ॥ १ ॥ अनुभवी बिना अनुभव कहा जानिये जाको पिया नहिं चित्त चोरें प्रेमके सिंधुको मरम जान्यो नहीं सूर कहे कहा भयो देहवोरें ॥ २ ॥ २२ ॥ फलफलित होय फलरूप जाने ॥ देखी हू ना सुनी ताहीकी आपुनी काहुकी आपुनी ताहुकी बात कोऊ कैसे माने ॥ १ ॥ ताईके हाथ निरमोल नग दीजिये जोई नीके कर परख जाने ॥ सूर कहे क्रूरतें दूर वसिये सदा यमुनाजीको नाम लीजे जु छाने ॥ २ ॥ २३ ॥ श्री यमुनेपतिदासके चिन्ह न्यारे ॥ भगवदीकुं भगवत्सङ्ग मिल रहे तहे जाके हिये बसत प्राणप्यारे॥१॥

गूढ श्री यमुने बात सोई अब जानहीं जाके मन-मोहन नयन तारे ॥ सूर सुख निरधार वे पावही जापर होहें श्रीवल्लभ कृपारे ॥ २ ॥ २४ ॥ श्री यमुने रसखानको सीस नाऊं ॥ ऐसी महिमा जान भक्तकों सुख दान जोई मागुं सोई जु पाऊं ॥ १ ॥ पतित पावन करन नाम लीनो तरन दृढकर गहि-चरण कहुं न जाऊं ॥ कुंभनदास गिरिधरन मुख निरखत यही चाहत नही पलक लाऊं ॥ २ ॥ ॥ २५ ॥ यमुने अगणित गुण गने न जाई ॥ यमुने तट रेणु इनते हाते तनु नवीन इनके सुख देनको करों बडाई ॥ १ ॥ भक्त मागत जोई देत तेई क्षण सो ऐसी को करे प्रण निवाई ॥ कुंभनदास गिरिधरनमुख निरखत कहा केसें कर मन अघाई ॥ २ ॥ २६ ॥ श्रीयमुने पर तन मन प्राण वारो ॥ ताकी कीरती विशद कोन अब कहिसके ताहि नयननते न नेकटारों ॥ १ ॥ चरण कमल इनके जो चिंतत रहूं निश दिना नाम मुख ते उचारों ॥ कुंभनदास कहै लाल गिरिधरन मुख इनकी कृपा भई तब निहारों ॥ २ ॥ २७ ॥ भक्त इच्छा पूरण श्रीयमुने जु करता ॥ बिना मागहू देत कहांलो

कहों हेत जैसे काहु को कोऊ होय धरता ॥ १ ॥ श्री यमुना पुलिन रास व्रजवधू लिये पास मन्द मन्द हासकर मनजु हरता ॥ कुंभनदास लाल गिरिधर मुख निरखत यही जिय लेखत श्री यमुने जु भरता ॥ २ ॥ २८ ॥ रासरससागर श्री यमुने जु जानी ॥ वहत धारा तन प्रति दिन नौतन राखत अपने उरमांझ ठानी ॥ १ ॥ भक्तको सह भार देत जु प्राण आधार अति ही बोलत मधुर मधुर वानी ॥ श्री विठ्ठल गिरिधरनवर वस किये कौन पे ज्ञात महिमा बखानी ॥ २ ॥ २९ ॥ भक्त प्रति पाल जंजाल टारे ॥ अपने रस रंगमें संग राखत सर्वदा जोई श्री यमुने नाम उच्चारे ॥ १ ॥ इनकी कृपा अब कहां लग वरनिये जस राखत जननी पुत्र बारे ॥ श्री विठ्ठल गिरिधरन संग विरहत भक्तको एक छिन ना विसारे ॥ २ ॥ ३० ॥ कोन पे जात श्री यमुने जु वरणी ॥ सबनको मन मोहत मोहन पिया सो पियाको मन ये जु हरणी ॥ १ ॥ इन विना एक क्षण रहे न जीवन धन व्रज चन्दमन आनंद करनी ॥ श्री विठ्ठल गिरिधर संग आय भक्त के हत अवतार धरनी ॥ २ ॥ ३१ ॥

श्री यमुनाजीको नाम ले सोई सुहागी ॥ इनके स्वरूप को सदा चितवन करे कल न परे जाय नेह लागी ॥ १ ॥ पुष्टि मारग मरम अतिही दुर्लभ करम छांड सगरे परम प्रेम पागी ॥ श्री विठ्ठल गिरिधरन ऐसो निधि भक्तकों देत है बिना मागी ॥ २ ॥३२॥ श्री यमुना के नामते अघ दूर भाजे ॥ जिनके गुण सुननकों लाल गिरिधरन पिय आय सन्मुख ताके विराजे ॥ १ ॥ तेहि छिन काज ताके सगरे सरें जायकें मिलत व्रजवधू समाजे ॥ कृष्णदास कहे ताहि कौन को डर जाके ऊपर श्रीयमुनेसी गाजे ॥ २ ॥ ३३ ॥ श्री यमुनाजीके नाम लेई जु लहिये ॥ जाकी लगन लागी नंदलालसों सर्वस देकें निकट जु रहिये ॥ १ ॥ जिनहीं सुगम जान बात सब मान बिना पहिचान कैसें जु पैये ॥ कृष्णदास जो कहे श्री यमुने नामनौका भक्त भवसिंधु ते योहीं जु तरैये ॥ २ ॥ ३४ ॥ श्री यमुने तुमसी एक होजु तुमहीं ॥ करो कृपा दरस निशवासर दीजिये तिहार गुण गान को रहे उद्यम हीं ॥ १ ॥ तिहार पाय ते सकल निधि पावहीं चरण कमल चित भ्रमर भ्रमहीं ॥ कृष्णदास कहे कोन यह

तप कियो तिहारे ढिग रहतहे लता द्रुमही ॥ २ ॥ ॥ ३५ ॥ कीजिये कृपा लीजिये नाम ॥ श्री यमुने जगन्नन्दनी गुण न जात कहुं गनी जिनके ऐसे धनी सुन्दर श्याम ॥ १ ॥ देते संयोग रस ऐसे पिया हैं जु वश सुनत तिहारो सुयश पूरे सब काम ॥ कृष्ण दास जो कहे भक्तहित कारने श्री यमुना एक छिन न करे विश्राम ॥ ॥ २ ॥ ३६ ॥ श्रीयमुने के साथ अनघ फिरत हें नाथ ॥भक्त के मनके मनोरथ पूरत सब काहांलो कहिये इनकी जु गाथ ॥ १ ॥ त्रिविध शृंगार आभूषण पहिरें अंग अंग शोभा बहुत भात दास परमानन्द पाये अब व्रजचंद राखे अपने शरण वहेजु जात ॥२॥३७॥ श्री यमुनेकी आस अब करत हे दास ॥ मनकर्मवचन कर जोरके मागत निशादिन राखिये अपने पास ॥ १ ॥ तहां पिय रसिक वर रसिकनी राधिका दोऊ जन संग मिल करत रास ॥ दास परमानन्द पाये अब व्रज चन्द देख सिराने नयन मंद हास ॥ २ ॥ ३८ ॥ श्रीयमुने पियको बस तुम जु कीने ॥ प्रेमके फंदते घेर राखे निकट ऐसे निर्मोल नग मोल लीने ॥१॥ तुम जो पठावत तहां अब धावत तिहारे रस रंगमें

रहत भीने ॥ दास परमानंद पाये अब व्रजचंद परम उदार श्रीयमुने जू दीने दान ॥ २ ॥ ३९ ॥ श्रीयमुना सुखकारना प्राणपतिके ॥ जिन ही भूले जाते पिया तिने सुधकर देत कहां कला काहय इनके जु हितके ॥ १ ॥ पिया संग गान कर उमग जो रस भरे देत तारी कर लेत जतके ॥ दास परमानंद पाये अब व्रजचंद यही जानत प्रेम गतके ॥२॥४०॥ शरण प्रतिपाल गोपाल रति वर्धनी ॥ देत पति पंथ प्रिय कंत सनमुख करत अतुल करुणा भई नाथ अंग अर्धनी ॥ १ ॥ दीनजन जान रस पुंज कुंजेश्वरी रमत रस रासपिय संग निश शर्दनी ॥ भक्तिदायक सकल भवसिंधु तारिणी करत विध्वंस जन अखिल अघ मर्दनी ॥ २ ॥ रहत नंद सूनु तटनिकट निशदिन सदा गोप गोपी रमत मध्य रस कंदनी ॥ कृष्ण तन वरण गुण धर्म श्रीकृष्णके कृष्ण लीला भई कृष्णसुख कंदनी ॥ ३ ॥ पद्मजा पाय तूं संगहीमुररिपू सकल सामर्थ्य भई पापकी खंडनी ॥ कृपारस पूर वैकुंठ पदकी सिढी जगत्त विख्यात शिव शेष शिर मंडनी ॥ ४ ॥ पर्यो पदकमलतर और सब छांड के देख दग-

कर दया हास्य मुख मंदनी ॥ उभय करे जोर कृष्णदास विनती करे करो अब कृपा कलिंदगिरि नंदिनी ॥ ५ ॥ ४५ ॥

संपूर्णः

---

## आश्रयकेपद ।

॥ पद राग केदारो ॥

भूल जिन जाय मन अनत मेरो ॥ रहो निश दिवस श्रीवल्लभाधीशपदकमलसूं लाग विन मोलकों चेरो ॥ १ ॥ अन्य सम्बन्ध तें अधिक डरपत रहो सकल साधनहुं ते कर निवेरो ॥ देह निजगेह यह लोकपरलोकलों भजो सीतल चरण छांड अरुझेरो ॥ २ ॥ इतनी मागत महाराज करजोरके जेसो हुं तेसो कहाउ तेरो ॥ रसिक शिरकर धरो भवदुःख परहरो करो करुणा मोहिराख नेरो ॥ २ ॥ १ ॥

राग बिहाग ।

आशरो एक श्रीवल्लभाधीशको ॥ मानसी रीतकी मुख्य सेवा व्यसन लोक वैदिक साग शरण गोपीशको ॥ १ ॥ दीनताभाव उदुबोध गुणगानसों धोय त्रियभावना उभय जाने ॥

श्रीकृष्ण नाम स्फुरे पलन आज्ञा टरे कृति वचन विश्वास दृढचित्त आने ॥ २ ॥ भगवदीय जान सत्संगको अनुसरे ना देखे दोष अरु सत्य भाखे ॥ पुष्टिपथ मर्म दश धर्म यह विधि कहे सदाचित्तमें श्री द्वारिकेश राखे ॥ ३ ॥ २ ॥

भरोसो दृढ इन चरनन केरो ॥ श्रीवल्लभ नखचंद्र छटा बिन सब जगमांझ अंधेरो ॥ १ ॥ साधनओ नहीं या कलिमें जासों होय निवेरो ॥ सूर कहा कहे द्विविध आंधरो बिना मूलको चेरो ॥ २ ॥

भरोसो श्रीवल्लभजीको राखो ॥ सधरे कागज सगेंगे ।छिनमें इनहीके गुन भाखो ॥ १ ॥ निशदिन संगकरो भक्तनको असमर्पित नहीं चाखो ॥ वल्लभ श्रीवल्लभ पदरज विन ओर तत्व सब नाखो ॥ २ ॥ ४ ॥

